# श्रीअरविन्ददर्शनम्

प्रणेता

**सत्यप्रकाशसिंहः**

अलीगढ़मुस्लिमविश्वविद्यालयीय-
संस्कृतबिभागप्राध्यापकः

*अलीगढ़नगरस्थं*

**विवेकप्रकाशनम्**

# समर्पणम्

करैः क्लिन्नैरब्जं रविरपि दिनादौ हिमहतम्
विधत्ते यो श्रीशं तदपि न हि चित्रं सुमनसः ।
प्रकाशः यो सूर्यादजनि भुवने मंगलमुखा—
ज्जगन्नन्दं नन्दं कुलकुमुदलोकं कलयते ॥

दलदरविन्दमरन्दे मुखरमिलिन्दे विबुधेनारामे ।
तेनोहो यो तेने तेनोमा मोदते नारम् ॥

# विषयसूची

# प्राक्कथनम्

भगवान् श्रीअरविन्दो वेदान्तनिष्ठाभिनवपूर्णाद्वैतदर्शनशास्त्रस्य प्रवर्तकोऽस्ति। तद्दर्शनं खलु परमयोगिलब्धात्मसंवेदनप्रतिष्ठितम्। नवनवोन्मेषशालिप्रातिभबुद्धिमवलम्ब्य सुयुक्तिजालविसारेण स्वकीयाध्यात्मानुभूतिः दर्शनाकारेण प्रकटिता परमयोगिना। औपनिषदज्ञानातिक्रान्तः तद्दर्शनसारो न केवलमुपनिषदविरोधि, अपि च सुतरां तत्पोषकः। श्रीअरविन्दप्रवर्तितपूर्णब्रह्मवादः खलु सर्वेषां दर्शनविद्योत्साहिनामन्वेषणीयः।

श्रीअरविन्दस्य प्रमुखा ग्रन्था आँग्लभाषायां विरचिताः। तद्दर्शनविषये देवभाषायां लिखितस्य ग्रन्थस्य अद्यावधि अभाव आसीत्। अथ दर्शनविद्यार्थिनः तत्प्रवर्तितपूर्णाद्वैतवादस्य ज्ञानं लब्धुमशक्ता आसन्। आचार्यप्रवर-श्रीमत्-सत्यप्रकाशसिंह-महोदय-कृतेन ग्रन्थेनानेन तदभावो निराकृतः। तस्मात् विचक्षणो ग्रन्थकारः सर्वेषां दर्शनज्ञानान्वेषिणां प्रशंसापात्रम्। श्रीअरविन्ददर्शनविवरणमिदं भ्रमरहितम्; अस्य भाषा प्रसादगुणसमन्विता, रचनाशैली च मनोहारिणी।

विदग्धेन ग्रन्थकारेण इतरदर्शनगतैः कैरपि तत्त्वैः साकं पूर्णाद्वैतगतानां तत्त्वानां तुलनात्मिका समालोचना कृता। एतद्विषये सर्वे एव श्रीअरविन्ददर्शनाभिज्ञा ग्रन्थकारेण सहैकमत्यं स्वीकर्तुं न शक्नुयुः। तथा ह्यत्र प्रत्यभिज्ञादर्शनगतसदाशिवतत्त्वस्य पूर्णाद्वैतगतातिमानसतत्त्वस्य चैक्यं दर्शितम्। एतयोः तत्त्वयोरितरेतराभ्यां किञ्चित् सादृश्यमप्यस्ति, वैसादृश्यमपि। अस्मन्मते तु सदाशिवतत्त्वं श्रीअरविन्दप्रचारिताधिमानसतत्त्वस्य निकटतरम।

"श्रीअरविन्ददर्शनम्" इति नामधेयस्यास्य उत्कृष्टस्य ग्रन्थस्य विपुलाः पाठका भवेयुरितीयं मे प्रार्थना।

२०३२ विक्रमसंवत्सरे,
मकरसंक्रान्तौ,
पाण्डिचेरिनगरस्थे
श्रीअरविन्दाश्रमे

श्रीअरविन्दवसुः

# अवतरणिका

मानवत्वे भृशं समुन्नते सत्यपीदानीं जनजीवनं सङ्कटापन्नं दृश्यते । पुरा त्वेतत् सङ्कटग्रस्तं बभूवैव । किंतु तदानीन्तनं सङ्कटं भौतिकप्रायमासीत् । शीतातपातिवृष्ट्य-नावृष्टिरोगादिसङ्क्लिष्टो मानव आत्मरक्षणाय परिदेवयांचकार किल । ततः परं भवन-वस्त्र-भेषजादीन्याविष्कृत्य यदा किञ्चित् विश्रामोन्मुखः सञ्जातः तदा जैवभयसंत्रस्तो बभूव । अन्योन्यविजिगीषयाऽऽक्रान्तोऽसौ इतरेतररक्तपातनिरतः सञ्जातः । क्वचित् कलहः, क्वचिद् युद्धम्, क्वचिच्च सङ्ग्राम इत्येताभिर्विप्लवकारिणीभिर्घटनाभिर्निखिलमपि मानवैतिह्यं परिप्लाव्यमानं ज्ञायते । धार्मिक-सामाजिक-राजनैतिकार्थिक-वैज्ञानिकविधिवि-धानसंयोजनपरिणामस्वरूपं सम्प्रत्युभयविधं कष्टं भृशमपचितं नाम । किंतु तयोः स्थाने अपरमिदानीं वैचारिकं कष्टं समापन्नम् । क्वचिदेको धर्मोऽन्यत्रापरो धर्मः क्वचित् समाजवादोऽन्यत्र व्यक्तिवादः, क्वचित् सत्तावादोऽन्यत्र च प्रक्रियावाद इत्येवं जीववाद-मनोवाद-जडवाद-चैतन्यवादात्मवादानात्मवाद-सोद्देश्यवाद-निरुद्देश्यवाद इत्येतद्विधैर्वाद-शतैश्चङ्क्रम्यमाणा मानवमनीषा कदाचिदेकं मतमाश्लिष्यते, कदाचिच्चापरम् । एवं बरीभ्रमन्ती साऽशरणा परिपतति, अनेकधा च विदीर्यते । तन्नीतं मानवजीवनं सामञ्ज-स्यविहीनं जायते, समाजश्च विघटनबहुलः । मन्ये यन्मानवविचारविकासार्थं मतमता-न्तरप्रचार आवश्यक इति । किंतु जीवनस्य जगतो वा पक्षविशेषमात्रमाश्रित्योपबृं-हिता विचारपरम्परा यदा सत्यसर्वस्वत्वेन गृह्यते तदा महद्विघटनकारिणी भवितुं शक्नोति । एषैव वैचारिकी दुरवस्था साम्प्रतिके मानवसमाजे समुपस्थिता । क्वचिद् भौतिकविज्ञानविदो भूतमात्रस्य सत्यत्वं स्वीकुर्वाणाः तदितरपदार्थजातस्य भ्रमात्मक-त्वमुपपादयन्तो दृश्यन्ते । क्वचिदस्तित्ववादिनो निरुद्देश्यावयवसङ्घटनमात्रं व्यष्टि-सर्वस्वमिति प्रतिपादननिरताश्चेत् सन्ति तर्ह्यन्यत्रात्मवादिन आत्मव्यतिरिक्तं वस्तुजातं भ्रमस्वरूपमिति प्रचारयन्तो लक्ष्यन्ते । व्यष्टिवादिनः समष्टिमुपेक्षन्ते, समाजवादिनश्च व्यष्टिम् । मनोविश्लेषणपरास्त्ववचेतनपरिष्कारमात्रे एव मानवकष्टनिवारणोपायं पश्यन्ति, अर्थपराश्चार्थिकसाम्यमात्रे । तर्कपरायणास्तावत् तार्किकसामञ्जस्यमात्रे एव सत्यं निश्चिन्वन्ति, प्रत्यक्षवादिनश्चैन्द्रिकप्रत्यक्षत्वमात्रे । एवमन्योन्यैर्द्वन्द्वापन्ना इदानी-न्तना विचारका न केवलमन्धजनस्पृष्टहस्तिवृत्तान्तं चरितार्थं कुर्वन्ति परं जनजीवन-गतसामञ्जस्यविघटनमपि ।

एवं सति, एतस्य वैचारिकसङ्कटस्य निवारणाय काचिदेतादृशी विचारव्यवस्था-ऽवलम्बनीया या मानवोपलब्धसमस्तज्ञानसाधनप्रयोगोपजाता भवेत् निखिलजीवनजगद्-व्यापारसामस्त्यव्याख्यानसमर्था च स्यात् । प्रचलेयुर्नाम नवनवविचारोन्मेषप्ररूढा विविधा वैचारिकाः प्रयोगाः । किंतु यथा प्रयोगनिरतो विज्ञानवित् शिष्टाचारं न विस्मरति तथा विचारप्रयोगनिरता मानवजातिः तत्त्वसामस्त्यं न विस्मरेत् । निखिलेऽपि जगति अद्यपर्यन्तोद्भावितेषु दर्शनसिद्धान्तेषु सर्वतत्त्वसामस्त्यपरत्वात् श्रीअरविन्ददर्शनं तावदेनामावश्यकतां पूरयितुं क्षममित्युपपादयितुं शक्यते । इन्द्रियमनोगूढमानसाधिमानसातिमानसाभिधानां मानवलभ्यसर्वज्ञानसाधनानामुपयोगपरत्वादेतद् दर्शनं खलु ज्ञानप्रक्रियादृष्ट्या सर्वाङ्गसम्पूर्णं लक्ष्यते । व्यवहारेऽप्येतद् एकस्मिन् पक्षे जडचेतनवादौ समनुगमयति पक्षान्तरे अध्यात्मभौतिकवादौ, ततः परं व्यष्टिसमष्टिवादौ, जगदीश्वरवादौ, व्यवहारपरमार्थवादौ, सत्त्वप्रक्रियावादौ, विकासावतारवादौ च । किं बहुना, व्यष्टिसमष्टिपरमार्थेति तत्त्वत्रयविषयकाणाम्, धर्मार्थकाममोक्षेति पुरुषार्थचतुष्टयाधिकृतानाम्, इन्द्रियमनोऽतिमानसेति ज्ञानसाधनत्रिवर्गगतानाम्, जडचेतनेति तत्त्वाभिव्यक्तिप्रकारद्वयसम्बद्धानाम्, पौर्वात्यपाश्चात्येति संस्कृतिद्वयविरूढानां सर्वासां समस्यानां यादृशं समाधानं श्रीअरविन्ददर्शनेन प्रस्तूयते तादृशम् एकविचारसूत्रबद्धं समाधानं केनचिदपि दर्शनान्तरेण नोपस्थाप्यते । एतस्मात् कारणात् तद्दर्शनशास्त्रं सविशेषमध्येयं विमृश्यं च ।

श्रीअरविन्दसाहित्यस्य त्वाँग्लभाषोपनिबद्धत्वात्, तद्भाषावित्सु तदीयो विचारोऽनधिकायासेन देशदेशान्तरं प्रसरति । किंतु संस्कृतभाषा तन्मात्रविदश्चाधुनाऽपि तदनभिज्ञप्रायाः । एषाऽनभिज्ञता च सहृदयजनासह्या । कण्व-वामदेव-वसिष्ठ याज्ञवल्क्य-गौतम-कपिल -कणाद-शङ्करप्रभृतीनां प्रातिभचक्षुषामृषिमुनीनां तांस्तान् सिद्धान्तान् स्वात्मन्युपनिबध्नन्ती संस्कृतभाषा तस्यामेवार्षपरम्परायां समुद्भूतस्य अनूनप्रातिभचक्षुषो महर्षेः श्रीअरविन्दस्यानभिज्ञा स्यादित्यवगत्य कस्यैतद्भाषाविदो मनो न दूयेत ? वस्तुतस्तु चेदेषा भाषा ऊषरीभूतत्वादात्मानं रिरक्षिषति तर्हि तया यथाकालं नवनवोत्पद्यमानः सर्वप्रकारको ज्ञानविज्ञानपादपः स्वोद्याने आरोपणीयः । तत्रापि तया सह महर्षेः श्रीअरविन्दस्य विशिष्टः सम्बन्धो वर्तते । आँग्लभाषा-संस्कृति-विचारनिष्णातोऽप्यसौ संस्कृतभाषायां सवैशिष्ट्यं शिक्षते स्म, तन्निबद्धानां वैदिकसंहितानामभूतपूर्वो मर्मज्ञः संवृत्तः, तद्गतं विचारसारं विलक्षणरीत्योद्घाटितवान् । अपरं चासौ न केवलं संस्कृतधेनुदोहदक्ष एव संवृत्तः, अपितु तत्पोषणचिकीर्षुरपि । एषा भाषा कथं परिरक्षणीया संवर्धनीया चेत्येतस्मिन् विषयेऽधस्तादुद्धृतं तन्मतं सविशेषमवधेयम्—

"विद्वद्भाषारूपेण संस्कृतेन सम्प्रत्यपि भविष्योन्मुखेन भवितव्यम् । यस्मिन् दिवसे चैषा पुरातनभाषा लेखनविच्युता भाषणविरहिता वा भविष्यति असौ दिवसो भारताय हितकरो न भविता । परं तु चेदेषा भाषाऽऽत्मनो जीवितमत्त्वं रिरक्षिषति तर्हि अनया स्वकीयह्रासयुगोपार्जितेन दुर्घटसमासबाहुल्येन केशविदारणसन्निभातिगुरुपाण्डित्येन च सह कृत्रिमगौरवमयी शैली सर्वथा परित्याज्या ।" *

संस्कृतभाषाया वैशिष्ट्यं तु तदभिज्ञानां विदिततरमेव । तथापि प्रसङ्गतः स्मारयितुं शक्यते यत् कस्याश्चिद् भाषाया अभिव्यञ्जनाशक्तिस्तावत् तस्याः संश्लेषोन्मुखत्वे प्रयोगप्राचुर्ये च निहिताऽऽस्ते । मानसलक्षणसंश्लिष्टतत्त्वनिःसृतत्वात् तद्विचारपरम्परा खलु विकिरणशीलाऽपि सती संश्लेषोन्मुखी भवति । विकीर्णेषु तथ्येषु विचारेषु वा सङ्गतेः समन्वयस्य वाऽन्वेषणं तल्लक्ष्यम् । दर्शनशास्त्रमधिकृत्य त्वेषोक्तिः सविशेषं चरितार्था भवति । संस्कृतभाषा त्वनया दृष्ट्या निखिलेऽपि जगति विशिष्टतमा प्रतीयते । यथा परिमितविचारसूत्रेभ्यः सततं निस्सरन्तोऽसङ्ख्यका विचारलवाः सर्वविधसमन्वितविचारमण्डलनिर्माणोन्मुखा भवन्ति तथैव परिमितसङ्ख्यकेभ्यो धातुभ्यो निस्सरन्तोऽसङ्ख्यकाः शब्दाः एतस्यां भाषायामन्योन्यसङ्ग्रथनशीला जायन्ते । एतस्या अभिनवपदनिर्माणशक्तिरनन्ता, संश्लिष्टविचाराभिव्यक्त्यर्थमपेक्षिता पदसंश्लेषशक्तिरप्यनन्ता । अपरं चैषा भाषा एतद्विधसंश्लिष्टविचाराभिव्यक्तौ अनेकसहस्रवर्षेभ्यः प्रयुज्यमाना विद्यते । ये ये विचाराः तदभिव्यञ्जकानि पदानि च साम्प्रतिकैर्विद्वद्भिरितस्ततः तमसीव निर्वर्ण्यन्ते, ते ते विचाराः तदभिव्यञ्जकानि पदानि चास्यां भाषायां प्रायशः पूर्वतरसन्निहितानि सन्ति । अथ तेषामभिव्यक्तिप्रकारोऽपि सुसंश्लिष्टः सञ्जातः । कारणत्वनिर्देशार्थकपञ्चम्यन्तपदप्रयोगसम्भावनाबाहुल्यादेषा भाषा प्रतिपदं कारणकार्यनिरूपणपूर्वकं प्रसर्तुमर्हति । एतस्मात्कारणादेतस्यां सतर्कं समासेन च स्वल्पैरेव पदैर्विपुलमपि दार्शनिकमर्थं प्रकाशयितुं शक्यते ।

एतद्वैशिष्ट्यमत्त्वादेषा भाषा खलु श्रीअरविन्दविचारसम्भारं वोढुमर्हतमेति प्रतीयते । तद्विचारचक्रं हि सर्वविधचिन्तनसमन्वयपरत्वादतिसंश्लिष्टं बृहदाकारं च संवृत्तम् । प्रतिपदाभिनवविचारोन्मेषशीलं पञ्चदशसहस्रपृष्ठप्रायं तत्साहित्यं तावत् पुष्कलसङ्ख्याकविचारसरणिसङ्कुलम् । एतत्सरणिजातं चेतस्ततः परिवृत्यान्ततोगत्वाऽन्योन्यसमन्वयोन्मुखं भवति । एतस्य चङ्क्रममाणस्य विचारजातस्य सम्यग्विवृतिः संस्कृतभाषामपेक्षते ।

---

* श्रीअरविन्द सेन्टीनरी लाइब्रेरी, ग्रन्थ संख्या १७, पृ० २९९.

एतदेव मनसि निधाय मया कृतिरेषा चतुर्वर्षपूर्वं समारब्धा । श्रीअरविन्दमधिकृत्याँग्लभाषायां लिखितपूर्वेण मयाऽऽकलितमासीद् यदेषा कृतिरनतिदीर्घकालेनैव लेखबद्धा भविष्यतीति । परन्त्वेतद्विषयेऽस्य कार्यस्य प्राथमिकत्वाद् अनेकविधा दुस्तराः समस्याः कालक्रमेणाविर्भूताः । प्रथमे कल्पे तु तत्साहित्यवर्तिनामाँग्लपदानां संस्कृतपर्यायनिर्धारणमेव दुष्करं जातम् । श्रीअरविन्दविचारसरणेरेकस्मिन् पक्षे वेदोपनिषत्प्रभृत्यार्षग्रन्थमूलकत्वात्, पक्षान्तरे च साम्प्रतिकविचारव्यूहसंसृष्टत्वात्, तदभिव्यक्त्यर्थमहं यावदेकत्रार्षसाहित्यवर्तिनां समुचितानां पदानां चयनभारेणाक्रान्तोऽभूम तावदन्यत्राभिनवपदनिर्माणव्यापारेण । एतस्याः समस्यायाः समाधानक्रमेण मयैका शब्दसूची संकलिता या सम्प्रति ग्रन्थान्ते उट्टंकिता वर्तते। एषा तावद् आँग्लभाषावित्पाठकानां साहाय्यप्रदायिनी भवेत् ।

द्वितीये कल्पे, तद्विचारचक्राभ्यन्तरत आर्षसाहित्यमूलानां तदितरसाहित्यमूलानां स्वात्मानुभूतिमूलानां च विचारधाराणां विवेचनसमस्या समुद्भूता । एतद्गवेषणाक्रमेण क्वचिद् वैदिकसंहिता अनुसंहिताः, क्वचिदुपनिषदः क्वचिच्च श्रीशङ्कराचार्यप्रभृत्याचार्याणां विचारपरम्पराभिः तद्विचारसन्तोलनं सम्पादितम् ।अनेनैव क्रमेण सापेक्ष्यतावादमनोविश्लेषणवादप्रभृतिमतमतान्तराणामपि चर्चा समुपकल्पिता ।

अथ समावेशितैतादृग्विमर्शजात एष ग्रन्थो न केवलं श्रीअरविन्दविचारपरिचायक एव, परं तन्मूलगवेषणापरोऽप्यभिप्रेतः । किं तु गवेषणोन्मुखोऽपि सन्नेष क्वचिदपि खण्डनवृत्तिं न प्रयुङ्क्ते । तर्कमात्रप्रतिष्ठं दर्शनशास्त्रं हि सद्योऽपि खण्डनार्हं भवति, तन्निष्ठतर्कात् प्रबलतरतर्काणां सद्य एवोपलभ्यत्वात् । अध्यात्मानुभूत्याधृतं दर्शनशास्त्रं तु स्वप्रामाण्याप्रामाण्यविवेकार्थं यावदेकतः तद्विधार्षमतमतान्तरैः सह सन्तोलनमपेक्षते तावदन्यत्रागामियुगोत्पत्स्यमानानुभूतिनिर्णयम् । एतत्स्वरूपत्वात् श्रीअरविन्ददर्शनसिद्धान्तस्येदानीमप्यवगमनकाल एव विद्यते, खण्डनमण्डनकालश्च न समागत इत्यस्मन्मतिः। एष पुष्कलसम्भावनासमृद्धः । एतास्त्वत्र स्थाने स्थाने निर्दिष्टाः ।

समासेनैवं वक्तुं शक्यते यदस्मिन् ग्रन्थे ऐतिहासिकसमसामयिकमूलान्वेषणपूर्वकं भाविसम्भावनानिर्देशपुरस्सरं च श्रीअरविन्दविचारचक्रं तावत् सर्वाङ्गपूर्णसुव्यवस्थितदर्शनसिद्धान्तरूपेणोपस्थापयितुं यतितम् । एतस्मिन् व्यवस्थापनयत्ने संस्कृतभाषायाः संश्लिष्टता पुष्कलसाहाय्यप्रदायिनी संवृत्ता । तन्निबद्धत्वाद् एतद् दर्शनशास्त्रं यावदेकस्मिन् पक्षे व्यवस्थिततरं संवृत्तं तावत् पक्षान्तरे भारतीयदर्शनपरम्परया सह सम्पृक्ततरत्वं नीतमिति विश्वसिमि । ग्रन्थेनानेन चेत् श्रीअरविन्दविचारधारावगाहने किञ्चित् सौकर्यमुत्पादितं तर्ह्यात्मानं सार्थकश्रमं मनिष्ये ।

मानवस्य स्खलनशीलत्वादेतस्यां कृतौ भाषाविषयकाणि विचारगतानि च कानिचिद् दूषणानि सम्भाव्यन्ते नाम । यत्सत्यं त्वेतेषां दूषणानां सङ्ख्या विपुलतराऽभविष्यच्चेन्मयैतस्याः संशोधनकार्ये केषाञ्चिद् विद्वद्वर्याणां स्वकीयाभिजनानां साहाय्यं नावाप्तम् । एतन्नगरस्थधर्मसमाजमहाविद्यालयीय आचार्यः श्रीमनोहरलालगौडमहाभागः, वार्ष्णेयमहाविद्यालयीय आचार्यः श्रीबाबूरामयादवमहाभागः, अस्मद्विभागीय आचार्यः श्रीचिन्तामणिकेंघेमहाभागः, आचार्यः श्रीरघुनाथपाण्डेयमहाभागश्चैतस्मिन् प्रसङ्गे सविशेषमुल्लेख्या धन्यवादार्हाश्च । वार्ष्णेयविद्यालयीयं आचार्यश्रीसुरेन्द्रपालसिंहमहाभागमपि विस्मर्तुं न शक्नोमि येन सुरुचिपूर्वकं मुखपृष्ठछविर्विलिखिता । अन्ततः श्रीअरविन्ददर्शनविच्छिरोमणेर्विश्वविश्रुतस्याचार्यस्य श्रीअरविन्दवसुमहोदस्याभारं कैः पदैरुल्लिखेयं येन प्राक्कथनं विधायैष ग्रन्थः समलङ्कृतः । इति

२०३२ विक्रमसंवत्सरे,
माघमासे, कृष्णपक्षपञ्चम्याम्, 
अलीगढ़नगरे

*सत्यप्रकाशः*

## प्रथमोऽध्यायः

# सच्चिदानन्दः

परमतत्त्वजिज्ञासापूर्विका तावद् दर्शनशास्त्रस्य प्रवृत्तिः, सा च जगदादिकारणान्वेषणपरत्वेनात्मानं प्रकाशयति । किंकारणं जगदित्यपेक्षायामसद्‌दुत्पन्नमेतदिति केचित् । कस्माच्चित् सत्‌तत्त्वात् तदुत्पत्तौ स्वीकृतायां तद्धेतुत्वेन तदन्तरस्य, ततोऽपि सदन्तरस्यापेक्षितत्वात्, अनवस्थादोषः प्रसज्येदिति तेषां तर्कः । जगत्कारणं सत्स्वरूपमपि सन्ननिर्वाच्यमिति केचिदपरे । अतएव भगवता बुद्धेन जगतोऽव्याकृतकारणत्वमङ्गीकृतम् । पुनश्च, अव्याकृतस्वरूपस्य तत्त्वस्य शून्यकल्पत्वं विमृश्य श्रीनागार्जुनाचार्य एतस्य शून्यस्वरूपत्वमेव प्रत्यपादयत् । अतः परम्, आदितत्त्वस्यानिर्वाच्यत्वम्, अनिर्धार्यत्वम्, शून्यकल्पत्वं चोपकल्प्य कैश्चिद् एतस्य निष्प्रयोजनत्वमेवोद्घुष्टम् । जगत्कारणत्वं नाम जागतिकप्रक्रियामात्रव्याख्येयमिति तेषां संकल्पः । प्रक्रियापरम्परामात्रकं जगद् वृहद्यन्त्रवत् स्वचालितमेव प्रवर्तते इति तेषां मतिः । एतन्मतं नाम सम्प्रति पदार्थविज्ञानविद्भिरुपपादितम् । नन्वेतदपि मतं निर्बाधं न प्रतीयते । जडचेतनात्मकस्य जगतो जडांशमात्रमेव यान्त्रिकत्वव्याख्यार्हं स्यात्, न तु कथमपि चेतनांशम् । चैतन्यतत्त्वस्य यान्त्रिकत्वेन व्याख्यातुमशक्यत्वात्, जगत्कारणत्वप्रसङ्गे यन्त्रवादो विपद्यते । जडचेतनयोरन्योन्यस्वभावप्रत्यनीकत्वं विमृश्य सांख्यप्रभृतयः केचिज्जगत्कारणस्यैकत्वमुत्सृज्य द्वित्वमेवाश्रयन्ते । तत्त्वद्वयं च सत्—जडात्मिका प्रकृतिः, चेतनात्मा पुरुषश्च । परन्त्वेते तत्त्वे कथं नामान्योन्यसन्निकर्षं लभेते जगत्कारणत्वं च भजेते इति व्याख्यातुमशक्यत्वात्, एतयोरन्यतरेणैव पारमार्थिकेन भवितव्यमिति तर्कसंगतं प्रतीयते । एवं सति, प्रश्नोऽत्र विजृम्भते यदेतयोः तत्त्वयोः कतरत् प्रथमतरमिति । अत्रैतयोर्मध्येऽन्यतरस्यान्यतरव्याप्यत्वं निर्धारकत्वेनोपयोजयितुं शक्यते । अनेन प्रकारेण प्राप्यते यत् सर्वत्र जडतत्त्वं चेतनतत्त्वव्याप्यं भवति, न तु चेतनतत्त्वं जडत्त्वव्याप्यम् । व्याप्यव्यापकयोः तत्त्वयोर्मध्ये व्यापकस्यैव प्राथम्यादनुमीयते चेतनतत्त्वमेव प्रथमतरमिति । चेतनतत्त्वप्राथमिकत्वसिद्धान्तस्तावदीश्वरकारणत्वेनाविर्भवति । कश्चिच्चैतन्यमयोऽतिजागतिकः पुरुष आत्मशक्त्या जडचेतनात्मकं जगत् सृष्ट्वा स्वयं त्वेतस्मात् पृथक् स्थित इतीश्वरकारणवादिनां तावन्मूलभूता मान्यता । परन्त्वेवं सति, एतादृश ईश्वरस्य जगत्कारणत्वप्रयोजनमेव सन्दिग्धं भवति । दुःख-

बहुलं खलु जगत् । नन्वेतादृशं जगत् किं जगद्बाह्येनेश्वरेण निष्प्रयोजनं सृष्टं सप्रयोजनं वा ? निष्प्रयोजनत्वे तु तस्य चैतन्यमयत्वं बाधितं स्यात्, सप्रयोजनत्वे च तस्य शिवत्वम् । एवं चैतन्यमयत्वशिवत्वाभ्यां विरहितस्येश्वरस्य तु स्वत्वमेव संदेहास्पदं स्यात् ।

विप्रतिपत्तिमिमां मनसि कृत्वा वेदान्ताचार्यैरत्र बहूहापोहान्विता नानाविधाः परिकल्पना उपस्थापिताः । जडत्वं दुःखमयत्वं च विमृश्य श्रीशङ्कराचार्येण जगतो ब्रह्मकृतत्वं निराकृत्य मायोद्भावितत्वमुपपादितम् ।[1] तन्मतेन, ब्रह्म जगद्व्यतिरिक्तम्, विकारशून्यम्, अनिर्वचनीयं चास्ति । मायाप्रत्युपस्थापितोपाध्यवच्छिन्नं भूत्वा तत् ईश्वरभावं व्रजति । एवंविध ईश्वरो मायायोगेन जगत्सृष्टिपरोऽपि सन् परमार्थतोऽसद्भूत एव मतः ।[2] अतः तत्सृष्टिभूतं जगदपि परमार्थतोऽसद्रूपमेव । श्रीरामानुजाचार्यस्तु जगतो ब्रह्मस्रष्टृत्वं स्वीकुर्वन्नप्येतस्य दुःखमयत्वं पूर्वसर्गकालिकजीवकृतकर्मनिमित्तकम्, जडत्वं चेश्वरशरीरभूताचित्तत्त्वजन्यमिति मन्यते । एतत्तत्त्वद्वयस्य प्रकारान्तरव्याख्यानाशक्यत्वात् श्रीमध्वाचार्योऽद्वैतत्वं परित्यज्य ईश्वरजीवप्रकृतिरूपिणीं तत्त्वत्रयीमेवाङ्गीचकार । मूलतत्त्वानेकत्वं तु न कथमपि पारमार्थिकं भवितुमर्हति ।

परमतत्त्वविषयकाणामेतेषां मतानामेकदेशीयत्वमधिगम्य महर्षिणा श्रीअरविन्देन स्वं मतमुपस्थापितम् । परमतत्त्वस्यानिर्वाच्यत्वं स्वीकृत्य तद्व्याख्याविरामो नाम दर्शनशास्त्रकृते स्वलक्ष्यच्युतिरित्यसौ मन्यते । परमतत्त्वमधिकृत्यैतत् शास्त्रं हि न त्वांशिकमतप्रतिपादनपरं स्यात्, नैव भ्रामकमतप्रतिष्ठापरम् । एतेन तु तादृग्विचारवातायनः उद्घाट्यो येन सर्वाणि मतमतान्तराण्यात्मनिष्ठसदसदंशविवेकपूर्वकाणि परिलक्षितानि स्युः, तादृशी परिकल्पना चोपस्थापनीया यया तथ्यजातं व्याख्यातं स्यात् ।[3] अनेन मापदण्डेन परिमितोऽनिर्वचनीयवादो निरर्थक इव प्रतीयते । तन्निस्सृतः शून्यवादोऽपि न तथा विवेकजननो यथा भ्रमोत्पादकः । अतिमानसचैतन्यमात्रावगम्यं तत्त्वं मानसेन चैतन्येन व्याचिख्यासितं सन् निखिलवैशिष्ट्याक्रान्तमिव प्रतीयते इति श्रीअरविन्दमतम् । एषैव प्रतीतिर्ब्रह्मविषयकाणां निर्गुण–निष्कल–निर्विकार-निर्वैयक्तिक-निष्क्रिय-शून्यानिर्वचनीयप्रभृति–प्रत्ययानामुद्भावयित्री । किन्त्वेतादृशं प्रतीयमानमपि पारमार्थिकं तत्त्वं पक्षान्तरे सर्वभावमयमिव ज्ञायते ।[4] शून्यत्वेन प्रथितं तदेव तत्त्वं निखिलायाः सत्ताया जनकत्वेन प्रसिद्ध्यति;

१. श्रीशङ्कराचार्यकृतब्रह्मसूत्रभाष्ये, १.१.४.

२. तस्मिन्नेव, २.१.१४.

३. श्रीअरविन्दकृत—दि लाइफ डिवाइन (पाण्डिचेरी, १९५५), पृ० ६७८.

४. तस्मिन्नेव, पृ० ३७६.

तदेवानिर्वचनीयाभिधं तत्त्वं निखिलमपि वाग्विषयमुत्पादयति । एतस्मान्निश्चीयते शून्यत्वेन प्रतीयमानं पारमार्थिकं तत्त्वं न खल्वभावात्मकमिति । तस्याभावात्मकत्वं नाम सापेक्षिकम् । दिदृक्षितस्य पदार्थस्यादर्शने द्रष्टा निसर्गत एव तस्याभावात्मकत्व-मवधारयितुमर्हति । पदार्थानुपलब्धौ तददर्शनमत्र कारणम्, न तु तदभावः ।

वस्तुतस्तु परमतत्त्वं भावाभावात्मकेन द्विविधेन मार्गेणोपगम्यते । अभावात्मकस्य मार्गस्य निदर्शनं त्वौपनिषदीय—"नेति नेति"—प्रक्रियायामुपलभ्यते । परमतत्त्वस्य निखिलजागतिकपदार्थवैचित्र्यमन्वीक्ष्य खल्वेषा प्रक्रियावलम्बिता स्यात् । परं त्वेतावन्मात्रेणैव तस्य तत्त्वस्याभावात्मकत्वं न साध्यते । निखिलजागतिकपदार्थकारणत्वात् परमतत्त्वं भावात्मकमिति तु भावात्मकस्य मार्गस्य निष्कर्षः । न हि कथमप्यभावात्मकं तत्त्वं भावात्मकं जगदुत्पादयितुं क्षममिति तु तदवलम्बिनां तर्कः । परं त्वेतावता नानुमितं स्यात् परमतत्त्वसत्त्वं जागतिकपदार्थसत्त्वस्वरूपमिति । तथा सति तु सापेक्षिकोऽभावः परमतत्त्वव्यतिरिक्तः कारणान्तरापेक्षश्चानुमतः स्यात् । अतएव परमतत्त्वं जागतिकपदार्थस्वभावविमर्शनिष्पन्नाभ्यां सदसत्प्रत्ययाभ्यामसम्यङ् निर्देश्यं सदपि तत्प्रतिष्ठास्वरूपं तदनुगतं तत्सत्त्वभूतं चेतिश्रीअरविन्दमतम् ।[५] तन्मतेन, जगत् न त्वसदुद्भूतं नैवासत्प्रतिष्ठम् । एतत् त्वनन्तसत्ताकार्यविशेष स्यात्, तत्स्वरूपमेव वा ।[६] परमतत्त्वस्य शून्याभिधानत्वं तु सर्वमानसप्रत्ययातीतत्वजन्यम् । अथ तेन तत्त्वेन सर्वविधास्तित्ववाचकमानसप्रत्ययातिशायिना भवितव्यम्, न त्वसत्त्वात्मकेन ।[७]

ननु भावात्मकमपि सत् जगन्मूलकारणं यत्सत्यं सांयोगिकघटनानुक्रममात्रकमिव प्रतीयते । जगद्धि यावदेकतः स्थिरनियमानुसारि तावदन्यतः सांयोगिकघटनाबहुलम् । एतस्य सांयोगिकघटनाबहुलत्वं खल्वेतत्कारणत्वेन तादृक्तत्त्वं लक्षयति यत् तांस्तान् पदार्थान् तास्ता घटनाश्चासम्बद्धं निरुद्देश्यं चोत्पादयति संयोजयति वा । एतस्यां प्रक्रियायां या कापि नियमसंगतिर्दृश्यते सा तु घटनापुनरावृत्तिशीलत्वजन्मा । अथ पदार्थास्तित्वबोधोऽप्येतज्जन्यो भवेत् । परंतु भवेयुर्नामैता घटनाः कियन्मात्रमपि सांयोगिक्यः, एतासामनवरतं सातत्यं त्वेतत्कारणत्वेन किमपि स्थिरं मूलभूतं स्रोतो लक्षयति । एतत्स्रोतस्तु प्रकृतिशक्तिरेव स्यात् । अथैतज्जायमानत्वाज्जगति

५. तस्मिन्नेव, पृ० ५६५-६.

६. तस्मिन्नेव, पृ० ३१७.

७. तस्मिन्नेव, पृ० ३४५.

सांयोगिकत्वेन सार्धं भूयसी नियमानुगतिरपि प्राप्यते । नन्वेषा नियमानुगतिः स्वकारणस्य यान्त्रिकत्वं लक्षयितुमर्हति । तन्न । यान्त्रिकत्वं सन्देहास्पदमारोपयन्तः खलु बहवोऽन्ये दृष्टान्ता उपलभ्यन्ते । तथा हि, पुनरावृत्तिपरापि सती जागतिकी प्रक्रिया नवोन्मेषमयी दृश्यते । एतत् प्रक्रियानुगतं नवोन्मेषशालित्वं खलु जगद्विकासत्वेनोपचीयते । एतस्यां पृथिव्यामेव जडतत्त्वाज्जीवनतत्त्वस्य तस्माच्च मनस्तत्त्वस्य विकासोऽसम्भवः स्यात् चेज्जागतिकी प्रक्रियाऽऽवृत्तिमात्रपराऽभविष्यत् । अनेन प्रकारेण सांयोगिकत्वनियतिपूर्वकत्वाभ्यां निष्पन्नं जगतो विकासशीलत्वं तन्मूलकारणस्य सांयोगिकत्वमात्रत्वं यान्त्रिकत्वमात्रत्वं च निराकृत्य इतरस्वरूपकत्वं सूचयति ।[८]

सम्प्रति तु जगद्विकासप्रक्रियायाः सुनियोजितत्वं सुनिश्चितलक्ष्योन्मुखत्वं च स्फुटतरे भवतः । एते त्वेतस्याः प्रक्रियाया बुद्धिव्यापारपूर्वकत्वमुपलक्षयतः । बुद्धावेव हि नियत्यनुगमनपूर्वकं नवोन्मेषशालित्वं सुनिश्चितलक्ष्योन्मुखत्वं च प्राप्येते । एतदेव मनसि निधाय कैश्चिन्मूलकारणत्वेन कश्चिदतिजागतिकः पुरुषः कल्पितो यो बुद्धिव्यापारपूर्वकं जगत् सृष्ट्वा चालयंश्च तस्य पृष्ठत आत्मानं तिरोधाय स्थितः, तन्मानसप्रत्ययभूतं पदार्थजातम्, तद्विहिता नियतिः, तदुत्पादिता विकल्पाश्चेति ।[९] नन्वेतन्मतस्य जनमानसरोचकत्वे नास्ति कश्चित् संशयः । सामान्यजनः प्रागैतिह्यकालात् प्रायेणैतस्मिन्नेव मते श्रद्दधानो दृश्यते । परं त्वेतस्मिन् मते स्वीकृते सति पुनरेव प्रश्न उपजायते किमर्थं खल्वेतेन सर्वशक्तिमता सर्वज्ञेन चेश्वरेणैतदशिवप्रायं दुःखबहुलं च जगत् सृष्टमिति । एष प्रश्नस्तु तदैव समाधातुं शक्यते यदातिजागतिकत्वेन सह तस्य जगन्मयत्वमपि स्वीक्रियेत ।

ननु तस्यातिजागतिकत्वं जगन्मयत्वं च कथं संगच्छेताम् ? चेदसौ काचिद् व्यष्टिः, तस्य समष्टित्वं बाधितं भविष्यति; चेदसौ समष्टिभूतः, तस्य व्यष्टित्वमपाकृतं भविष्यति । जगति तु व्यष्टिसमष्टी अन्योन्याश्रिते भवतः । एतस्मात् कारणात् जगन्मूलकारणेन व्यष्टित्वसमष्टित्वोभयात्मकेन भवितव्यम् । एतेन सह तस्यातिजागतिकत्वं त्वपरिहार्यमेव । पुनश्च, नियतिसांयोगिकत्वसहकृतनवोन्मेषपूर्वकं सृष्टिविकासकारित्वं तस्यापरं वैशिष्ट्यम् । अथैतेषामन्योन्यविरोधिधर्माणां समन्वयस्वरूपत्वात्, सोद्देश्यकारित्वाच्च तेन कारणेन चैतन्यात्मकेन भवितव्यम् ।

---

८. तस्मिन्नेव, पृ० ३५७-८.

९. तस्मिन्नेव, पृ० ३५८-६०.

ननु तच्चैतन्यमयत्वप्रत्यनीकभूतं प्रबलतमं कारणं जगतो जडप्राधान्यमस्ति। जगत् खलु कादाचित्कचैतन्यज्योतिरन्तरितं जडत्वप्रायमिव प्रतीयते। अत एवैतज्जडत्वमयं ब्रह्मव्यतिरिक्तं चेति श्रीशङ्कराचार्यो मन्यते। जीवव्यतिरिक्तं निखिलमपि जगदचिन्मयमिति श्रीरामानुजाचार्येणापि सिद्धान्तितम्। जडत्वमेव मनसि निधाय श्रीमध्वाचार्य एतस्य ब्रह्मभिन्नत्वं प्रत्यपादयत्। श्री अरविन्दस्त्वेतेभ्यः सर्वेभ्योऽपि मतेभ्यः पृथग्भूय जगतश्चैतन्यमयत्वमुपपादयति। तन्मतेन, कार्यधर्मः सर्वथा कारणधर्मानुवर्तीत्युपपादयितुं न शक्यते। समवायिकारणस्य कार्यव्यापकत्वात्, कार्यधर्मेण स्वकारणे आत्मोत्पत्तिप्रागप्यनुगतेन भवितव्यम्। अतश्चेत् कार्यगतः कश्चिद् धर्मः कारणेऽदृष्टो भवेत्, तावन्मात्रेण नानुमेयं यदसौ धर्मः कादाचित्कमात्र एवेति। अनया रीत्या, जगति चैतन्यस्य जडतत्त्वोद्भवान्नानुमितं स्यादेतज्जडतत्त्वस्य कादाचित्को धर्म इति। प्रत्युत, जडतत्त्वविकासापेक्षश्चैतन्याविर्भावश्चैतन्यस्य जडतत्त्वसारभूतत्वं सूचयति। अथ जडतत्त्वाच्चैतन्योत्पत्तिः तदन्तर्हितधर्माविर्भावमात्रमेवेति स्वीकर्तव्यम्। यथा कश्चिच्चेतनः पुरुषो मूर्छितः सन् निश्चेतन इव लक्ष्यते, तथा तत्त्वतश्चेतनस्वरूपं जगज्जडमिव प्रतीयते। एवं सति, जगत्कारणस्य चैतन्यमयत्वं निर्बाधं भवति।

ननु स्यान्नाम मूलकारणं सत् चिच्च, तत्प्रवर्तितस्य जगतो दुःखबहुलत्वं तु विमृश्य तत्खलु दुःखात्मकमित्येव प्रतीयते। एवमुपस्थापिते सति, श्रीअरविन्दो मूलकारणस्यानन्दमयत्वेन प्रत्युपतिष्ठते। निरानन्दत्वे तु जगदेव न संभवेदिति तन्मतम्। सचेतनं सत्त्वजातं ह्यानन्दोन्मुखं भवति। सर्वेऽप्यस्माकं व्यापारा आनन्दमेवोद्दिश्य प्रवर्तन्ते। जडपदार्थेष्वपि सौकर्योन्मुखत्वं दृश्यते। सौकर्योन्मुखत्वं नाम नानन्दोन्मुखत्वविजातीयम्। एतावता खलु निखिलस्यापि जगत आनन्दोन्मुखत्वमुपपद्यते। अथ चेन्मन्येत मूलतो निरानन्दमेव सज्जगत् विकासक्रमेणैवानन्दोन्मुखं भवतीति, तदपि न तर्कसंमतम्। परमतत्त्वं हि जगतो न केवलं मूलकारणम्, चरमलक्ष्यभूतमपि मतम्। एवं सति, यं प्रति निखिलमप्यानन्दोन्मुखं जगत् प्रवर्तते तेनानन्दमयेनैव भवितव्यम्। पुनश्च, आनन्दोन्मुखेन जगता न केवलं स्वलक्ष्यप्राप्तावेवानन्दमयेन भवितव्यमपित्वात्मास्तित्वस्य यस्मिन् कस्मिन्नपि क्षणे। सौकर्यसिद्धान्तानुसारं च जगदनुत्पन्नमेवाभविष्यच्चेदेतद् दौष्कर्यबहुलमभविष्यत्। "को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इत्युपनिषदपि।[१०] अनेन प्रकारेण जगतोऽदुःखबहुलत्वमानन्दोन्मुखत्वं च तत्कारणस्यानन्दमयत्वं बोधयतः।

श्रीअरविन्दो जगन्मूलकारणस्य सच्चिदानन्दत्वं तर्कबलेन सह योगानुभूति-

---

१०. तैत्तिरीयोपनिषदि, २।७.

बलेनापि साधयति । यत्सत्यम्, तस्मिंस्तर्को योगानुभूतिमनुवर्तते । योगबलेनोपार्जिता मूलकारणविषयिण्यनुभूतिः तेन सतर्कमुपबृंहिता । यावत् तर्को मानसव्यापारपर्यवसायी भवति, तावद् योगानुभूतिः सम्पूर्णाध्यात्मव्यापिनी । यावत् तर्केण मूलकारणस्य सच्चिदानन्दत्वं परोक्षतः साध्यते, तावद् योगानुभूत्या तत् प्रत्यक्षमनुभूयते । अन्तर्मानसाधिमानसाभिधसोपानयोरूर्ध्वं मूलकारणस्य सन्मयत्वम्, चिन्मयत्वम्, आनन्दमयत्वं चेतरेतरपृथग्भावेनानुभवितुं शक्यन्ते । तत्र कस्याञ्चिदनुभूत्यां जगत् निर्विशिष्टसत्तोत्पन्नमिव प्रतीयते । तत्र सच्चिदानन्दस्य चिदानन्दमयत्वं सदन्तर्हितं भवति । कस्याञ्चिदितरस्यामनुभूत्यां मूलकारणं चिन्मयमेव प्रतीयते । तत्र सच्चिदानन्दस्य सदानन्दमयत्वं चिदन्तर्हितं भवति । शेषास्वनुभूतिषु तु तस्यानन्दमयत्वमेवानुभूयते, इतरपक्षद्वयस्य तस्मिन्नेवान्तर्भावात् । अथैतादृशीष्वनुभूतिषु तत्तत्सोपानोपलभ्यानुभवभेदेन मूलकारणं सन्मात्रं चिन्मात्रमानन्दमात्रं च प्रतीयते । पुनश्चैतेषामनुभवानां संग्रहणेन योगी सच्चिदानन्दमप्येकपदे एवाधिगन्तुं शक्नोति । एतत्सोपानीयायामनुभूत्यां सच्चिदानन्दः सत्-चित्-आनन्द-संयोग-निष्पन्न इव ज्ञायते । एतस्मात् सोपानादुत्थायातिमानसचैतन्ये प्रविष्टे सति त्वेतेषां पक्षाणामन्योन्यविभेदो निराकृतो भवति ।[11] परिणामतोऽत्र सच्चिदानन्दस्याद्वैतत्वमनुभूयते ।

एतस्मिन् पक्षत्रयेऽद्वैतत्वं गते सति, ईश्वरमधिकृत्योपजाता वैयक्तित्वनिर्वैयक्तित्वात्मिका समस्यापि समाहिता भवति । ईश्वरो वैयक्तिको निर्वैयक्तिको वेत्येतद्विवादः खलु पुरातनः । अतिमानसचैतन्याधिगम्यस्येश्वरतत्त्वस्यावरचैतन्यद्वारेणाधिगमनप्रयासस्तावदेतद्विवादस्य कारणम् । अवरं चैतन्यं हि सामान्यविशेषयोः, व्यष्टिसमष्ट्योः, वैयक्तिकत्व–निर्वैयक्तिकत्वयोर्वा मध्यगतं विभेदमपाकर्तुमक्षमम् । एष विभेदस्त्वेतच्चैतन्यप्रतिफलितसच्चिद्विभेदोद्भवः । सामान्यात्मिका निर्वैयक्तिकी च सत्ता । विशेषात्मकं वैयक्तिकं च चैतन्यम् । एतस्मात् कारणात्, अतिमानसे चैतन्ये सच्चितोरद्वैतत्वे प्रसिद्धे सति, एतद्द्वन्द्वान्तर्गतो विरोधः प्रविलीयते । परिणामत ईश्वरस्य वैयक्तिकत्वं निर्वैयक्तिकत्वं च युगपदेवानुभूयेते ।

अनेन प्रकारेण निश्चीयते यद् वैयक्तिकत्व–निर्वैयक्तिकत्व–निर्विशिष्टः, सामान्यविशेषोभयानुगतः, अतिमानसचैतन्यावगम्यः, सत्-चित्-आनन्दाद्वैतस्वरूपः, निखिलद्वैतोद्गम ईश्वर एव सच्चिदानन्द इति । एतदेव श्रीअरविन्दाभिमतं परमं तत्त्वम् । यत्सत्यमसौ सच्चिदानन्दादप्यतिशायिनः तत्त्वस्य सम्भावनां न निराकरोति ।

---

११. दि लाइफ् डिवाइन, पृ० ३७३-४.

अपरं च, भवेन्नामैतादृशं तत्त्वं तर्कानवगम्यम्, चैतन्यावगम्यं भवितुं तु शक्यते एव । सच्चिदानन्दस्वरूपत्वाद्धि चैतन्यमतिमानसमप्यतिवर्तेत । अथ चेदतिमानसचैतन्यगतं तत्त्वं सच्चिदानन्दत्वेनावगम्यते, तर्हि विशुद्धसच्चिदानन्दीयचैतन्यगतेन तत्त्वेन सच्चिदानन्दादप्यतिशायिना भवितव्यम् । परं त्वस्मदध्यात्मसंस्थायामेतादृशश्चैतन्यस्य वस्तुतोऽलभ्यत्वात्, अतिमानसचैतन्यपर्यन्तारोहणप्रागेतत्तत्त्वस्यानिर्वचनीयस्वरूप इव प्रतीयमानत्वाच्च श्रीअरविन्द एतद्विषये तावन्मौनमेव वरं मन्यते । तद्दर्शनस्य जगद्दिव्यीकरणप्रयोजनवत्त्वात्, एतस्य प्रयोजनस्य च सच्चिदानन्दमात्रसाध्यत्वात्, तदतिक्रान्तं तत्त्वं तेन सविस्तरं नालोचितम् ।

अथोक्तस्वरूपः सच्चिदानन्द एतद्दर्शनस्य मूलभूतं तत्त्वम् । एतदेव तत्त्वमाश्रित्यासौ सम्पूर्णमपि स्वदर्शनप्रासादं निर्मिमीते । अत्र चेत् कश्चिदुत्तिष्ठेत् प्राक्कल्पितत्त्वाश्रितं दर्शनशास्त्रमतर्कसंगतमिति, तर्ह्यनवगत-'दर्शन'-शब्दार्थेन तेन भवितव्यम् । एतच्छास्त्रं हि सूक्ष्मदृष्ट्येक्षिततत्त्वान्वीक्षणपूर्वकमेव जायते । सच्चिदानन्दस्य खलु सूक्ष्मचैतन्यदृष्ट्येक्षितत्वात्, अन्वीक्षणोपबृंहितत्वाच्च नास्त्यवकाशस्तत्रैतद्विधस्याक्षेपस्य ।

ऐतिहासिकमायाममधिकृत्यैतद्वक्तुं शक्यते यत् श्रीअरविन्दप्रतिपादिते सच्चिदानन्दतत्त्वे श्रीशङ्करप्रभृतिभिराचार्यैः प्रस्तावितानि चरमतत्त्वविषयकाणि बहूनि मतानि समाविष्टानि भवन्तीति । "अपास्तसमस्तविशेषमेव ब्रह्म" इति श्रीशङ्कराचार्यः ।[१२] एवं मतं ब्रह्म सत्-चित्-आनन्द-व्यतिरिक्तमनिर्वचनीयं च । श्रीअरविन्दोऽपि सच्चिदानन्दीयचैतन्यानुभाव्यं ब्रह्मैतादृक्कल्पमिति मन्यते । परन्तु श्रीशङ्कराभिमतान्निखिलावरतत्त्वोच्छेदशीलाद् ब्रह्मणो व्यतिरिक्तं श्रीअरविन्दाभिमतं ब्रह्मानिर्वचनीयमपि सत् सच्चिदानन्दप्रभृतितत्त्वजातकारणमस्ति, अन्यथा त्वेतेषामव्याख्येयत्वप्रसंगः स्यात् ।

ननु ब्रह्म सच्चिदानन्दमयं सच्चिदानन्दस्वरूपं वेति प्रश्न उत्पद्यते । उपनिषत्सूभयरूपाः श्रुतयो दृश्यन्ते—"विज्ञानमानन्दं ब्रह्म", "स एको ब्रह्मण आनन्दः", "आनन्दं ब्रह्मणो विद्वान्" चेति । द्वितीयप्रकारकश्रुतिप्रमाणेन श्रीरामानुजाचार्यो "व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म, अपित्वानन्दि, ज्ञातृत्वमेव ह्यानन्दित्वत्" इति मन्यते ।[१३] तन्मतानुसारम्, ब्रह्म न खलु सत्-चित्-आनन्दस्वरूपं प्रत्युत सत्-चित्-आनन्दमयमस्ति; सच्च चिच्चानन्दश्च तद्गुणभूताः; तत् त्वेतद्गुणविशिष्टम् । एतद्विधं ब्रह्मैतेभ्यो गुणेभ्यः तथैवातिरिच्यते यथा कश्चित् पुरुष आत्मगुणेभ्य इति तन्मतस्वार-

१२. ब्रह्मसूत्रभाष्ये, ३।२।११.

१३ श्रीभाष्ये, १।१।१.

स्यम् । श्रीअरविन्दस्त्वेनं विवादमवस्तुतन्त्रं मन्यते । तन्मतेनैषोऽवरकोटिकचैतन्यमिश्रिताज्ञानजन्मा । तथा हि, मानसे चैतन्ये विशेष्यविशेषणयोर्गुणगुणिनोश्चात्यन्तिको विभेदो मन्यते । अत्र गुणो भिन्नकोटिकः प्रतीयते गुणी च भिन्नकोटिकः । निर्गुणद्रव्येण सह निर्द्रव्यगुणस्य मिश्रणात् सगुणं द्रव्यमुपजायते इति मानसचैतन्यनिर्णयः । मानसचैतन्यमात्रावसितो नैयायिको गुणद्रव्यविभागे एतन्मतं सम्यगुदाहरति । अधिमानसचैतन्ये त्वेष विभेदः परिक्षीणोऽपि सन् निरवशेषो न भवति । अतएवाधिमानसपर्यन्तारोही श्रीरामानुजाचार्यो ब्रह्मण्यपि गुणद्रव्यविभागं पश्यति । अतिमानसचैतन्ये त्वेतस्य विभागस्य निराकृतत्वात्, तदारोहिण औपनिषदर्षयो ददृशुर्यद् ब्रह्मोभयविधं सत्-चित्-आनन्दमयं, सत्-चित्-आनन्दस्वरूपं चेति । श्रीअरविन्दमतेन, तस्य सच्चिदानन्दमयत्वं जागतिकमस्ति, सच्चिदानन्दस्वरूपत्वं चातिजागतिकम् । तत्त्वतस्तु तद्गतजागतिकत्वातिजागतिकत्वयोरन्योन्याभिन्नत्वात्, ब्रह्मणः सच्चिदानन्दस्वरूपत्वे सच्चिदानन्दमयत्वमन्तर्हितं मन्तव्यम्, सच्चिदानन्दमयत्वे च सच्चिदानन्दस्वरूपत्वम् ।

श्रीवल्लभाचार्येणापि ब्रह्मविषयकसगुणत्वनिर्गुणत्वयोर्मध्ये सामञ्जस्यं स्थापयितुं चेष्टितम् । "न चक्षुषा गृह्यते", "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्"; "नापि वाचा"; "सर्वे वेदा यत्पदमामनन्ति" इत्यादीन्यौपनिषदवाक्यान्युदाहृत्य "न हि वस्तु द्विरूपं सम्भवति; वाक्यद्वयमपि प्रमाणमि"ति विरोधाभासं चोद्भाव्य "यथा सर्पो ऋजुरनेकाकारकुण्डलश्च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारं भक्तेच्छया स्फुरति" इत्यसौ समाधत्ते ।[१४] ननु ब्रह्मणोऽन्योन्यविरुद्धधर्माश्रयत्वव्याख्यानाय भक्तेच्छामात्रावलम्बनं तथैवापर्याप्तं यथा जगद्वैचित्र्यव्याख्यानाय मायाकारित्वोद्भावनम् । श्रीअरविन्दस्त्वेतत्सर्वं ब्रह्मणोऽन्योन्यविरुद्धधर्माश्रयत्वं ज्ञातृचैतन्यान्तर्गतसोपानभेदमुखेन समाधत्ते । माया-भक्ति-प्रभृतीनामवान्तरसाधनानां स्थाने सर्वविधज्ञानस्रोतोभूतस्य चैतन्यस्याश्रयणं तत्कृतप्रयासस्यौचित्यं सूचयति ।

---

१४. अणुभाष्ये, ३।२।३,२७.

---

## द्वितीयोऽध्यायः

# चित्शक्तिः

कारणं त्रिविधं भवति, समवाय्यसमवायिनिमित्तभेदात् । यत्कारणं रूपान्तरीभूय कार्यरूपं गृह्णाति तत् समवायिकारणम् । यथा घटस्य मृद् समवायिकारणम् । असमवायिकारणं तु समवायिकारणस्य कार्यत्वे सहकारिभूतम् । यथा मृदो घटत्वप्राप्तौ चक्रचीवरादिकम् । निमित्तकारणं तु तद् यत् कार्यत्वपरिणामकारकं भवति । यथा मृदो घटत्वपरिणामे कुम्भकारः । ननु चेज्जगत् कार्यम्, तर्ह्येतेनैतत्कारणत्रयात्मकेन भवितव्यम् । एतदेवापेक्ष्य दर्शनविदः सुचिरकालाज्जगत्कारणत्वं विविधं व्याचक्षाणा दृश्यन्ते । तैः प्रायशोऽसमवायिकारणं तिरस्कृत्य समवायिनिमित्ते एवोपस्थाप्येते । तैर्मन्यते यदस्ति किञ्चिन्मूलभूतं तत्त्वं यस्माद् उपादाय उपादाय कश्चित् कर्त्ता तथैव जगन्निर्मिमीते यथा कुम्भकारो भूमेर्मृत्तिकामादाय घटं करोति । अनया रीत्या महर्षिणा गौतमेन परमाण्वीश्वरात्मकम्, कपिलेन च पुरुषप्रकृत्यात्मकं कारणद्वय प्रस्तावितम् ।

परं त्वेतद्विधेषु मतेषु विप्रतिपत्तिर्जायते कथं तावदेते कारणे अन्योन्यमुपसरत इति । अपि निमित्तकारणमुपादानकारणमुपसरति, उपादानकारणं वा निमित्तकारणमिति ? किं वा द्वे अपि कारणे अन्योन्याभिमुखं समुपसरतः ? यस्मिन् कस्मिन्नपि विकल्पे स्वीकृते सति, प्रश्न उपजायते किं नु निमित्तमुपसरणस्येति ? किं द्वयोरन्यतरमन्यतराश्रितं भवति, अन्यतरसाहाय्येनात्मानं तितर्पयिषति वा ? एतस्यां कल्पनायामन्यतरस्य कारणत्वस्वातन्त्र्यं बाधितं भवति । अथ कैश्चिद्दर्शनविद्भिः कारणद्वयस्यान्यतरः पक्षो विलुलोपयिषितः । तथा हि, श्रीशङ्कराचार्येण समवायिकारणं मायात्मकमिति निर्णीतम्; ख्रिष्टेस्लामधर्मप्रवर्तकाभ्यां च समवायिकारणं निरवशेषं निराकृत्य जगत ईश्वरेच्छामात्रकारणत्वमुपन्यस्तम् । ननु समवायिकारणस्य मायात्मकत्वे स्वीकृते सति जगतोऽपि मायामात्रत्वमुपपद्यते । मायासमवायिकारणत्वं खल्वसत्कल्पम् । जगतोऽसत्त्वोपपादकेन दर्शनशास्त्रेण तु क्वचिद् भ्रान्तेन भवितव्यम् । ईश्वरेच्छामात्रोपादाना सृष्टिस्त्वनन्योदाहरणा सती अतर्कपुष्टा भवति, अथ चायिश्वसनीया ।

किञ्च शाङ्करप्रभृतीन्युक्तमतानि निमित्तकारणविशुद्धिरक्षणार्थमुद्भावितानीव प्रतीयन्ते। सदोषं खलु जगत्। परिवर्तनशीलत्वमेवास्य दोष इत्येते दर्शनविदो मन्यन्ते। परिवर्तनं तु गत्याश्रितम्। एतस्मात् कारणात्, स्वनिर्दोषत्वरक्षणाय जगन्निमित्तकारणेन गतिरहितेन भवितव्यम्। किं तु गतिहीनं कारणं किञ्चिदप्युत्पादयितुमक्षमम्। एवमनन्यगतिकाः सन्त एते दर्शनविदो मायावादप्रभृतीनि मतान्यवलम्बन्ते।

उपर्युक्तेषु मतेषु तं तं दोषं प्रेक्षमाणः श्रीअरविन्दो जगत्कारणविषयिकीं समस्यां प्रकारान्तरेण समाधत्ते। गतिस्थितितत्त्वयोर्मध्ये तादृशमन्योन्यविरुद्धत्वमसौ न मन्यते यादृशमुपर्युक्ता दर्शनविदः। वस्तुतस्तु, जागतिकेष्वपि पदार्थेष्वेते अन्योन्यसमन्विते दृश्येते। तथा हि, दृष्टिभेदेन पृथिवी स्थितिशीलापि प्रतीयते गतिशीलापि। अथ चेद् गतिस्थितितत्त्वे पृथिव्यामपि सहस्थे इवानुभवितुं शक्येते, तर्हि कथं न सच्चिदानन्दे? पृथिवी खलु सान्ता। सच्चिदानन्दस्त्वनन्तः। अथ चेत् सान्तोऽपि पदार्थोऽन्योन्यविरुद्धधर्माश्रयत्वं गन्तुं शक्नोति, तर्हि कथं नानन्तः?[1] अनन्तस्यानन्त्य तावद् देशकालविषयकत्वेन सह गुणविषयकमपि स्यात्। एवं सति सच्चिदानन्दान्तर्गते गतिस्थितितत्त्वे सहस्थे भवितुं शक्नुतः। किन्त्वेतावता गतिस्थितितत्त्वद्वयसंघातमात्रमेवासाविति न मन्तव्यम्, तत्त्वान्तराणामपि तस्मिन् सद्भावात्। वस्तुतस्त्वेते द्वे अपि तत्त्वे तत्पक्षद्वयम्। असौ त्वेते व्याप्नोत्यपि, अतिक्रामत्यपि। अपरं च, जगत् परिणामात्मकमस्ति, सच्चिदानन्दस्तु सत्तात्मकः। परिणामात्मकत्वात्, जगति गतितत्त्वं मौलिकमस्ति, स्थितितत्त्वं तु तत्सातत्यबोधजन्यम्। सत्तात्मकत्वात्, सच्चिदानन्दे तु स्थितितत्त्वं मौलिकम्, गतितत्त्वं तावत् तत्सहयोगिभूतम्। एतदेव सच्चिदानन्दान्तर्गतं गतितत्त्वं श्रीअरविन्देन चित्शक्तिरित्यभिहितम्।

चित्शक्तिस्तावच्चैतन्यस्वरूपिणी सत्यपि शक्त्यात्मिका। नन्वेतस्या एतत्स्वरूपद्वयमन्तर्विरोधान्वितमिव प्रतीयते। जगति हि चैतन्यं शक्तिहीनम्, शक्तिश्च चैतन्यहीना। एतस्मात् कारणात्, अत्र चैतन्यं जडतत्त्वसापेक्षं भवति। सच्चिदानन्दीये चैतन्ये त्वेतादृशी स्थितिर्नास्ति। एतस्मिन् हि सच्चितौ न केवलं सहस्थे, अद्वयतत्त्वपक्षद्वयभूते अपि भवतः। अतएवात्र सत् चिन्मयं भवति, चित् च सन्मयी। अथ सतः क्रियाभूता शक्तिरत्र चिन्मयी भवति। सच्चिदानन्दान्तर्गतशक्तिचैतन्ययोरेतदेवान्योन्याश्रितत्वं खलु चित्शक्तिप्रत्ययकारकम्।

एषा शक्तिस्तु न केवलमनुमानावगम्या, योगावबोध्याप्यस्ति। बहुसोपानात्मको हि योगावबोधः। एकस्मिन् सोपाने तावत् तत्त्वजातं शान्त्यात्मकं प्रतीयते। अत्र "क्रियाशीलं चैतन्यं स्वक्रियया सह शान्तावन्तर्हितं भवति; अस्माकं कृते प्रकृतिः

१. दि लाइफ् डिवाइन, पृ ३६६.

सृष्टिश्चासद्भूते भवतः ।" सोपानान्तरे त्वात्यन्तिकं सत् अद्वितीयपुरुषवदनुभूयते यस्मिन् तदीया शक्तिरन्तर्हिता भवति । एतस्मादप्यूर्ध्वतरसोपानारोहानन्तरं वैयक्तिके सत्ये निर्वैयक्तिकेन सत्येन सह समन्विते सति, आत्यन्तिकस्य तत्त्वस्य द्विपक्षात्मकत्वमनुभवपदमवतरति । एतयोरेकः पक्षः आत्मा, अपरश्चात्मशक्तिः । एतावेव पक्षावीश्वरशक्तियुग्म इति गृह्येते । ईश्वरस्तु सच्चिदानन्दाख्यः, शक्तिश्च चित्शक्तिः । एषाप्यनुभूतिरनेकसोपानात्मिका । अतिमानसचैतन्ये तावदात्मा तत्शक्तिश्चात्मन्येवैकत्वं भजेते । अध्यात्मचैतन्ये त्वेतावेवेतरेतराभ्यां विविक्तौ भूत्वा क्रियात्मकौ भवतः । अत्रात्मशक्तिरेव "माया", "पराशक्तिः", "चित्शक्ति"रित्यादिभिर्पदैरभिधीयते ।[2]

सर्वातिशायिनोऽपि सच्चिदानन्दस्य जगद्व्यापकत्वात्, तत्शक्तिभूता चित्शक्तिरपि यावदेकस्मिन् पक्षे सर्वातिशायिनी, तावत् पक्षान्तरे सर्वकारयित्री । एतेन सर्वातिशायित्वेन साऽनभिव्यक्तस्वरूपात् सच्चिदानन्दादपृथग्भूतेव तिष्टति । यथा कस्यचित् प्राणिनो गमनशक्तिः स्थितावनभिव्यक्तापि सती तत्त्वतः सद्भूता, तथैवानभिव्यक्तसच्चिदानन्दशक्तिभूता चित्शक्तिः सृष्टिव्यापारप्रागात्मनिष्ठा भवति । एषैव शक्तिः सृष्टिव्यापारोन्मुखी सती क्रियाशीलत्वात् प्रकृतिरित्यभिधीयते । प्रकृतिः किल चित्शक्तेः क्रियात्मकं स्वरूपम् । अवस्थाभेदेनैषापि परापरात्मिकेति द्विविधा भवति । पराप्रकृतिस्तु सच्चिदानन्दस्य प्राथमिकी सिसृक्षा । एषैव क्रियात्मिका सती अतिमानसाभिधं तत्त्वमाविर्भावयति । अतिमानसतत्त्वस्य विशुद्धज्ञानात्मकत्वेन सूच्यते यदेषा विशुद्धज्ञानस्वरूपिणीति । पराप्रकृतेर्यः पक्षोऽतिमानसेतरसृष्टिकारको भवति, सोऽपरा प्रकृतिरिति कथ्यते । अपरा प्रकृतिस्तावदज्ञानमिश्रिता भवति । अज्ञानमिश्रितत्वादेषा मनोजीवनभूतात्मिकां सृष्टिमुत्पादयति ।[3]

यथा पराप्रकृतेर्माध्यस्थ्येन सच्चिदानन्दो व्यष्टिसमष्ट्यात्मकस्य जगतो रूपं गृह्णाति, तथा तन्माध्यस्थ्येनैवासावज्ञानमयजगद्रूपादुत्थाय ज्ञानात्मकं स्वरूपं प्राप्नुयात् । चेत् पराप्रकृतिवियोग एव तदीयाज्ञानावरोहस्य कारणम्, तर्हि तत्संयोग एव तदीयस्य ज्ञानाभिमुखारोहस्य कारणं स्यात् । तत्प्रेरितानि मनोजीवनजडतत्त्वानि स्वस्वाधिष्ठानादुत्थाय ज्ञानोन्मुखीभवितुमर्हन्ति । अनेन क्रमेणैतान्यज्ञानं विसृज्य ज्ञानात्मिकां परां प्रकृतिमारोढुं शक्नुवन्ति अथवा तामेव प्रकृतिमात्मन्यवतार्य तत्संसर्गेणात्मानं परिष्कृत्य तन्मयानि भवितुमर्हन्ति ।[4]

---

२. तस्मिन्नेव, पृ० ४२२-३.

३. श्रीअरविन्दस्य, लेटर्स ऑन योग, प्रथमे भागे पृ० २८७.

४. दि लाइफ् डिवाइन, पृ० ४२३-४.

चित्शक्तिर्विशुद्धचैतन्यात्मिका भवति, आत्मनिष्ठा च। प्रकृतिस्तु ज्ञानाज्ञानात्मिका विकारशीला च। एतस्मात् कारणादेते अन्योन्यविरुद्धे प्रतीयेते। यत्सत्यम्, नास्त्येष विरोधः कथञ्चित् पारमार्थिकः। विरोधे पारमार्थिके सति त्वेते अन्योन्योच्छेदपरे स्याताम्। वस्तुस्थितिस्तु नैतादृशी। तथा सति हि, यावत् सृष्टिकाले स्थित्यात्मकः सच्चिदानन्द उच्छिन्नोऽभविष्यत् तावत् सच्चिदानन्दे स्वात्मस्थे सति जगदेवोच्छिन्नमभविष्यत्। वस्तुतस्तु प्रकृतिव्यापारमध्यगता अपि वयं स्थित्यात्मकं स्वात्मनिरतं जगद्व्यापाराधारभूतं सच्चिदानन्दमनुभवितुं शक्नुमः।[५] एतस्माद् ज्ञायते यत् "परमार्थसत्ता न तु गतिशून्यस्य तत्त्वस्य शाश्वतिकमौदासीन्यम्, नैव गतिशीलस्य तत्त्वस्य शाश्वतिको व्यापारः, नैव कालक्रमापतितैतदवस्थाद्वयविपर्यासभूतैवे" ति।[६]

चित्शक्तेरेनां द्विरूपतां श्रीअरविन्दः तपसोपमिमीते। यथा कस्यचित् तपस्विनश्चैतन्यं समकालमेवात्मनिरतं भवति जगदुन्मुखमपि, तथैव चित्शक्तिः सच्चिदानन्दसन्निहितापि सती क्रियात्मिका भवति। तपस्विचैतन्यं नामोभयोरेवावस्थयोः ध्यानपरं भवति। विभेदकं तत्त्वं तु ध्यानप्रकृतिभेदमात्रम्। एवमेव चित्शक्तिरुभयोरेवावस्थयोरेकाग्रा भवति। एतस्या ऐकाग्र्यं नाम स्थितावात्मसंरक्षणपरं भवति, गतौ चात्मविसर्जनपरम्। यथा वा सप्रणालिके तडागे जलं समकालमेव गतिशीलमपि भवति स्थितिशीलमपि, तथैव चित्शक्तिः समकालमेव गतिशीलापि भवति स्थितिशीलापि।[७]

सच्चिदानन्दस्येश्वरात्मापुरुषात्मकेन रूपत्रयेणाभिव्यञ्जितत्वात्, तत्शक्तिभूता चित्शक्तिरपि तदनुरूपं रूपत्रयं धारयति। ईश्वरसहचरीभूतैषा शक्तिरित्यभिधीयते। एतद्दशापन्नैषा तथैवेश्वराभिन्ना भवति यथा शक्तिः शक्तिमतः। निखिलप्रपञ्चोद्गमभूताप्येषा न तद्दूषिता भवति। प्रपञ्चः तदधीनो भवति, न तु सा प्रपञ्चाश्रिता। यथेश्वरः प्रपञ्चस्वामी, तथा सा प्रपञ्चस्वामिनी। एतद्रूपा सा सच्चिदानन्दस्थं जगद्बीजं प्ररोहोन्मुखं करोति।

जगद्बीजे प्ररोहोन्मुखे सति शक्तिः शक्तिमतो विभिद्यते, व्यष्टिश्च समष्टेः। अथाभिव्यक्तेः द्वितीये चरणे चित्शक्तिर्मायारूपं गृह्णाति। एतद्रूपा सा सहचरी

---

५. तस्मिन्नेव पृ० ६८५.

६. तस्मिन्नेव पृ० ६८४.

७. तस्मिन्नेव पृ० ६८१-२.

भवत्यात्मनः। अथासौ निखिलप्रपञ्चव्यापिन्यपि सती, अन्योन्यपृथग्भूतानां व्यष्टीनां निर्माणपरा भवति; समष्टिगतापि सती, आत्मभिन्नेव प्रतीयते। तदवच्छिन्न आत्मा स्वात्मानं जगन्मूलमपि मन्यते, जगज्जातमपि, व्यष्टित्वमात्रावच्छिन्नमपि। अथासौ मायावशंगतः सन् नगण्यजीव इवाचरति; किन्तु तदध्यक्षत्वेन स्थितः सन् परतत्वसाक्षात्कारक्षमोऽपि भवति।

आत्माभिव्यक्तेः तृतीये चरणे तु सच्चिदानन्दः पुरुषाभिधो भवति, चित्शक्तिश्च प्रकृत्यभिधा। अत्र शक्तिशक्तिमतोर्नितान्तं पार्थक्यं प्रतिभाति; आत्मनश्च सर्वगतत्वं व्यष्टिनिष्ठत्वमात्रे पर्यवस्यति; मायायाः संकल्पश्च वस्तुरूपं धारयति। संकल्पशक्तिर्हि माया, विधानशक्तिस्तु प्रकृतिः। प्रकृतिपुरुषयोरेष युग्मो जगन्मूलकारणमिति मन्यते सांख्यैः। तेषां मतेन पुरुष उदासीनवत् तिष्ठति प्रकृतिश्च क्रियाशीला भवति, पुरुषश्चैतन्यात्मको भवति प्रकृतिश्च जडभूता, पुरुषोऽनेको भवति प्रकृतिश्चैका। द्वावप्येतावन्योन्याभ्यां स्वतन्त्राविति मन्यते तैः। श्रीअरविन्दस्त्वेतन्मतस्यापूर्णतामुद्घाटयति। प्रकृतिपुरुषयोरन्योन्यपार्थक्यं तावदवान्तरविकाससोपानोद्भवमिति तन्मतम्। प्रकृतिर्हि चित्शक्तेः परवर्तिरूपं पुरुषश्च सच्चिदानन्दस्य। अथ द्वयोरप्येतयोः शक्तिशक्तिमतोरिवाविनाभावेन परस्परसम्पृक्तयोरवान्तराभिव्यक्तिभूतौ प्रकृतिपुरुषौ कथं तावदन्योन्याभ्यामत्यन्तभिन्नौ भवितुं शक्नुतः ? एवं विचिन्त्य श्रीअरविन्दः प्रकृतिबद्धस्य पुरुषस्यानेकत्वमप्यानुषङ्गिकमिति मन्यते। पुनश्च, सांख्याभिमता प्रकृतिर्जडभूता, परन्तु श्रीअरविन्दाभिमता सा चैतन्यस्वरूपिणी, तज्जडत्वं च पश्चादुद्भवम्। तस्याः पारमार्थिकचिदात्मकत्वादेव विकासक्रमेण जडतत्त्वाच्चैतन्यमयं प्राणिजातमुत्पद्यते इति तदुपपत्तिः।

अनेन प्रकारेण चित्शक्तिर्विविधानि रूपाणि धारयति। तत्त्वतस्तु सा चिद्रूपिणी एकरूपा च। किन्तु विविधसृष्टिसोपानावरोहारोहक्रमेणासावचिद्रूपा, अनेकरूपा च भवति। अपि च सर्वगतसच्चिदानन्दसहचरीभूतापि सा प्रतिव्यष्टिभिन्नेव प्रतीयते। ननु केन प्रयोजनेन प्रेरिताऽसावेतानि रूपाणि धारयति ? शाङ्करवेदान्ते तु मायायाः सृष्टिप्रयोजनं तावद् ब्रह्मोद्दिष्टकौतुकमात्रजननम्। रामानुजवेदान्ते चैतत्प्रयोजनं जीवकृतपुण्यापुण्यकर्मफलप्रदानमात्रम्। प्रकृतेः क्रियाशीलत्वं तावत् पुरुषमोक्षनिमित्तकमिति तु सांख्यैर्निश्चीयते। श्रीअरविन्दस्त्वेनां समस्यामन्यथैव समाधत्ते। सच्चिदानन्दस्तावन्नास्ति बद्धो यन्मोक्षार्थं चित्शक्तिः प्रवर्तेत। असौ जीवकृतकर्मनियन्त्रितोऽपि नास्ति यत्प्रेरणावशात् स्वशक्तिं व्यापारयेत्। नृपवदसौ कष्टजीवनोऽपि नास्ति यद्विनोदार्थं सृष्टिमृगयाविहारी स्यात्। असौ त्वानन्दस्वरूप एव। तस्यानन्त्यात्, तदानन्दमयत्वेनाप्यानन्त्यविशिष्टेन भवितव्यम्। एवं सति, न खलु कल्प्या काचिदपि कृच्छ्रता तदानन्दमयत्वे यदपसारणार्थमसौ सृष्टिव्यापारे प्रवर्तेत। प्रयोजनान्तरस्या-

सम्भाव्यत्वात्, चित्शक्तेः सृष्ट्युन्मुखीभावस्तु सच्चिदानन्दस्वरूपपरामर्शमुखेनैवान्वेषणीयः। सच्चिदानन्दे खलु गतिस्थितितत्त्वयोर्मौलिकः सद्भाव इति त्वत्र स्मृतिपथमानेतव्यम्। अथ चेत् तन्निहितं स्थितितत्त्वं स्थित्यानन्दात्मकमस्ति, तर्हि तन्निहितेन गतितत्त्वेन गत्यानन्दात्मकेन भवितव्यम्। अनेन गत्यानन्देन तावत् सच्चिदानन्दान्तर्हितं गतितत्त्वं विकासोन्मुखं क्रियते। स्थितितत्त्वादाविर्भूयैव गतितत्त्वं विकासोन्मुखं भवितुमर्हति। अथ गत्यात्मकस्यानन्दस्य स्पष्टावबोधार्थं सच्चिदानन्दान्तर्हितगतितत्त्वस्याविर्भावाकांक्षैव सृष्टिरूपेण प्रतिफलतीति श्रीअरविन्दो मन्यते।

नन्वेतद्विधं श्रीअरविन्दमतमेकतो ग्रीसदेशीयेन प्लोटिनस्मतेन अन्यतश्च काश्मीरशैवाभिनवगुप्तमतेन सन्तोलनार्हम्। सृष्टिरीश्वरीयपूर्णत्वातिरेकस्वरूपिणीति श्रीप्लोटिना मन्यते। ईश्वरीयं स्वातन्त्र्यमेव जगत्कारणमिति तु शैवमतम्। ईश्वरीयं स्वातन्त्र्यं तु "अस्मादृक्प्राच्यपशुदशाविशेषासम्भाव्यमानातिदुष्करवस्तुसम्पादनं नाम।" एनामेवेश्वरीयस्वातन्त्र्यशक्तिं श्रीअभिनवगुप्तो मायाशक्तिरित्यभिधत्ते।[८] नन्वेवंविधमेतन्मतद्वयं यावदेकत ईश्वरीयं पूर्णत्वं स्वातन्त्र्यं च प्रतिपादयति, तावदन्यतः सृष्टिव्यापारस्य निष्प्रयोजनत्वमप्युपपादयति। तज्जन्मा निष्प्रयोजनता च सृष्टिव्यापारस्य नैरर्थक्यं निगमयति। दर्शनशास्त्रप्रयोजनं तु विवेच्यपदार्थमूल्याङ्कनम्, न च तन्नैरर्थ्योपपादनम्। अपरं च, निखिले सृष्टिव्यापारे निरर्थके सति, अस्मज्जीवनव्यापारस्यापि नैरर्थक्यमुपपद्येत। श्रीअरविन्दमतं तु निखिलसृष्टिव्यापारस्यानन्दोन्मुखत्वं प्रतिपाद्य तत्सार्थकत्वं, प्राणिकर्मणः प्रयोजनवत्त्वं च निरूपयति।

ननु काश्मीरशैवैश्चित्शक्तिप्रकल्पना श्रीअरविन्दात् सुचिरपूर्वतरमुपस्थापिता। तथा हि, वर्षसहस्राभ्यधिकमतिगतं वसुगुप्तोत्पलाभिनवगुप्तप्रभृतिभिश्शैवैरीश्वरशक्तेश्चित्शक्तिरित्यभिहितायाः। तैस्त्वेषा शक्तिः तथैवेश्वराभिन्ना निर्दिष्टा यथा तापोऽग्न्यभिन्नः, शक्तिर्वा शक्तिमदभिन्ना। तैरेवं जगत्कारणस्याद्वैतत्वमुपपादितम्।[९] परमतत्त्वरूपेण यथा श्रीअरविन्दः सच्चिदानन्दं स्वीकरोति तथैवैते शैवा महेश्वरम्। महेश्वरस्य "'सोऽयम्'' इत्येवंरूपत्वेन परामृशन्ती अध्यवसायशक्तिः" विमर्श इत्युच्यते।[१०] न कथमप्येषा महेश्वरभिन्ना। तद्भिन्नत्वे ह्यात्मविमर्शनिमित्तं काचिदपरा शक्तिरपेक्ष्येत। एवं त्वनवस्थादोषः प्रसज्येत। अपि च, महेश्वरभिन्नत्वे चित्प्रकाशभिन्ना सती, अप्रकाशमानत्वात्, एषानुपपाद्यसत्ताका स्यात्। "प्रकाशमानत्वे

८. श्रीअभिनवगुप्तस्य ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्, २।३।१७.

९. श्रीअभिनवगुप्तस्य श्रीतन्त्रालोके, १।६९.

१०. श्रीअभिनवगुप्तस्य ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्, १।५।२०.

तु प्रकाशैकात्म्यात्'' एषा महेश्वराभिन्ना भवति ।[11] अथैषा महेश्वराभिन्ना विमर्शशक्तिः "ज्ञानशक्तित्वमासाद्य क्रियाशक्तिभावेन स्फुरति" ।[12] अज्ञेयः खलु महेश्वरः । ययात्मशक्त्यासावात्मानं प्रकाशयति सा विमर्शशक्तिरित्यभिधीयते । यथा कश्चित् प्राणी "अहमिति" विमर्शपूर्वकम् "अहं जानामी"ति प्रतीत्य "अहं करोमी"ति क्रियोन्मुखो भवति, तथैव "अहमि"ति विमर्शानन्तरमात्मानं विषयत्वेन परिकल्प्य महेश्वरः तदनुरूपं क्रियाशीलो भवति ।[13] अथ विमर्शशक्तिरेवानुक्रमेण तथैव ज्ञानशक्तित्वं क्रियाशक्तित्वं च प्रतिपद्यते यथा सच्चिदानन्दान्तर्हिता चित्शक्तिः तस्मादात्मानं पृथक्कुर्वती मायारूपं धारयति, तदनु च सर्जनशीला सती प्रकृतिरूपम् । अपि च, सृष्टिप्रयोजनमप्यधिकृत्यैते शैवाः श्रीअरविन्दपरिपार्श्ववर्तिन इव प्रतीयन्ते । एतेऽपि मन्यन्ते यद् "आनन्दोच्छलिता शक्तिः सृजत्यात्मानमात्मने"ति ।[14]

एवंविधेन सन्तोलनेन ज्ञायते कियन्मात्रं काश्मीरशैवमतं चित्शक्तिमधिकृत्य श्रीअरविन्दसन्निकृष्टमिति । एवं सति, चेत् कश्चिदाक्षिपेत् काश्मीरमतादेव श्रीअरविन्देन स्वं मतं गृहीतमिति, तन्न सङ्गतम् । नैसर्गिकानुभूतिप्रसूते योगबलसंवर्धिते च तन्मते काश्मीरशैवमतं तद्दृष्टिपथं समायातमिति तज्जीवनैतिह्यविदः प्रमाणयन्ति । एवं सति, शैवमतेन सह तन्मतैकरूप्यं मतद्वयाधारभूतानुभूतेर्याथार्थ्यमुपपादयन्ति ।

---

११. श्रीक्षेमराजस्य प्रत्यभिज्ञाहृदये, १.

१२. श्रीभास्कराचार्यस्य भास्कर्याम्, २।१।१.

१३. श्रीअभिनवगुप्तस्य ईश्वरप्रत्यभिज्ञाविमर्शिन्याम् १।५।१५-१६.

१४. श्रीक्षेमराजस्य, स्तोत्रावली टीकायाम्.

## तृतीयोऽध्यायः

# अतिमानसम्

केन प्रकारेण सर्वधर्मातिक्रान्तं निर्गुणं निष्क्रियं प्रपञ्चातिशायि ब्रह्म सर्वधर्मसंवलितं सर्वगुणोपतं नानाविधक्रियात्मकं प्रपञ्चं सृजतीत्येषा समस्या वेदान्ते मुहुर्मुहुरुत्पद्यते। श्रीअरविन्दाभिमतः सच्चिदानन्दोऽपि जडत्वबहुलजगन्मूलोऽपि सन् विशुद्धचैतन्यस्वरूपः, नानात्वमूलोऽपि सन्नेकत्वपरः सर्वगुणोद्भवभूमिरपि सन् निगृहीतगुणाभिव्यक्तिः, जगत्कारणमपि सन् निखिलप्रपञ्चातिशायी वर्तते। चित्शक्तिरपि सच्चिदानन्दशक्तिस्वरूपत्वात्, शक्तिशक्तिमतोरन्योन्याभेद्यत्वाच्च तद्धर्मिण्येव। तेनैव सार्धमसावपि विशुद्धचैतन्यस्वरूपिणी, आत्मनिष्ठक्रियात्मिका, आनन्त्यविशिष्टाचास्ति। एवं सति, कथं नाम प्रक्रियापरं जडत्वप्रायं सान्तं नानात्वविजृम्भितमनन्तगुणगणैरहमहमिकया बाध्यमानं जगत् तादृक्चित्शक्त्योपेतसच्चिदानन्दादुत्पद्यते ?

श्रीअरविन्दस्त्वेनां समस्यामतिमानसद्वारेण समाधत्ते। अतिमानसमसौ सत्-चित्-आनन्दव्यतिरिक्तं चतुर्थं सच्चिदानन्दीयं पादं मन्यते। सच्चिदानन्दे खलु सत्-चित्-आनन्दाः समन्विता भवन्ति। अथवैते त्रयोऽप्येकस्यैव तत्त्वस्य पक्षभूताः। सच्चिदानन्दस्य सत्ता तावत् चिदानन्दमयी भवति, चैतन्यं सदानन्दमयम्, आनन्दश्च सच्चिन्मयः। जगति तु सत्ता चिदानन्दाभ्यां विरहिता भवति, चैतन्यं सदानन्दाभ्याम्, आनन्दश्च सच्चिदाभ्याम्। अतिमानसं त्वेतयोर्द्वैताद्वैतयोर्माध्यस्थ्यं करोति। आत्मनिष्ठसच्चिदानन्दाभ्यन्तर्हितमेतत् तदीयात्मचैतन्यप्रतीतिरित्यभिमतम्। ननु सच्चिदानन्दस्य सदात्मकत्वात्, तत्प्रतीतिभूतेनातिमानसेनापि सदात्मकेनैव भवितव्यम्। श्रीअरविन्दस्त्वतिमानसस्य सदात्मकत्वं स्वीकुर्वन्नपि सच्चिदानन्दीयसदात्मकत्वादेनं विविनक्ति। तन्मतेन यावत् सच्चिदानन्दीयं सदात्मकत्वं मूलत आत्मनिष्ठं भवति तावदतिमानसीयं सदात्मकत्वं गत्युन्मुखं भवति, अतिमानसस्य गत्युन्मुखसच्चिदानन्दाविर्भूयमानत्वात्। अथ प्रतीत्यात्मकत्वात्, गत्युन्मुखसदात्मकत्वाच्चैतत् सच्चिदानन्दीया विवेकशक्तिरिति मतम्। चेत् सच्चिदानन्दो ज्ञानोपेतः पुरुषः, चित्शक्तिश्च ज्ञानशक्तिः, तर्ह्यतिमानसं खलु तद्विवेकशक्तिरिति मन्तव्यम्। विवेकशक्तिस्तावद् ज्ञानावस्थिति-क्रियान्वितिभेदाद् पक्षद्वयात्मिका भवति। एवमेवातिमानसमपि द्विपक्षात्मकत्वेन पुरस्कृतम्। एकेन पक्षेण

तावत् तत् सच्चिदानन्दीयात्मप्रतीतिभूतं भवति, पक्षान्तरेण च तदात्मनिर्धारणशक्तिभूतम् । एतयोः प्रथमः पक्षः स्वरूपस्थितिभूतः, द्वितीयश्च क्रियान्वितिभूतोऽभिमतः ।[१] द्विपक्षात्मकत्वादेतदेकत एकत्वमूलमपरतश्च नानात्वोन्मुखं निर्दिष्टम् । एतस्मिन् खलु सत्ता चैतन्यात्मिका दृष्टा, चैतन्यं च सत्तात्मकम् । अतएवैतत् सत्यचिदित्यप्यभिहितम् ।

सच्चिदानन्दीयक्रियात्मकचैतन्यस्वरूपत्वादतिमानसं तु तदीयं "सङ्कल्पात्मकं ज्ञानमित्यपि कथ्यते ।[२] एतत्स्वरूपं तन्निखिलमपि जागतिकं नानात्वं स्वात्मन्येकीभूतमिव निदधाति । यथा कस्मिंश्चिन्मानवीये सङ्कल्पे बहवः कार्यक्रमा भावाश्चैकीभूताः तिष्ठन्ति, तथैव सच्चिदानन्दीयसङ्कल्पस्वरूपेऽतिमानसे निखिलमपि जागतिकं नानात्वमेकीभूय विद्यते । अपरं च, यथैकस्मादेव मानवीयसङ्कल्पचैतन्याद् बहूनि कार्याण्याविर्भवन्ति, तथैवैकस्मादेवातिमानसात् सम्पूर्णमपि नानात्वमयं जगदुत्पद्यते ।

सच्चिदानन्दीयविवेकस्वरूपातिमानसस्य माध्यस्थ्येनैवास्माकीना सृष्टिराविर्भावितेति वक्तुं शक्यते । सच्चिदानन्दो हि निखिलसृष्टिबीजानामाकरः । तस्यानन्त्यादेष आकरोऽप्यनन्त एव स्यात् । एतस्मादाकरान्निस्सृत्य निस्सृत्य सृष्टिबीजानि पदार्थरूपेण परिणमन्ते । एतेषां निस्सरणकारणं तु चित्शक्तिः । तयैव प्रेर्यमाणान्येतानि बीजान्यात्मनिष्ठां परित्यज्य गतावात्मनः प्रक्षिपन्ति । तस्यास्त्वानन्त्यात् तदीयया प्रेरणयाप्यनन्तात्मकया भवितव्यम् । अथ सृष्टिबीजाकरस्य चित्शक्तिप्रेरणायाश्चानन्त्यात्, तदुत्पन्नेन प्रत्येकेन पदार्थेनाप्यानन्त्यविशिष्टेन भवितव्यम् । एवं सति त्वस्मिन् जगति नैव काचिद् घटना घटितुं प्रभवेत् नैव कश्चित् पदार्थ आविर्भवितुं शक्नुयात्, सृष्टिश्चानन्त्याक्रान्ता सती विशीर्येत । अथ चेदेषा कथञ्चित् सम्भाव्येत नाम, तर्हि तादृशी नैवाभविष्यद् यादृश्यस्माकीना । निश्चिदाकारानुक्रमसम्बन्धविहीनैषा अनन्तघटनानाम्, अनन्तपदार्थानां चानन्तसंयोगस्वरूपिणी सती सर्वथानन्त्यविशिष्टैव स्यात् ।[३] एतस्याः सम्भावनायाः प्रतिकूलं त्वस्माकीना सृष्टिरस्ति सान्ता यस्यां च प्रत्येकं घटना सान्ता, प्रत्येकं पदार्थः सान्तः, घटनापदार्थयोरनुक्रमसम्बन्धौ च व्यवस्थितौ । अत्र प्रत्येकं पदार्थोऽवशिष्टपदार्थजातसम्बद्धोऽपि सन् स्वीयां व्यष्टिं विविक्तभावेन धारयति । एतत्स्वभावा सृष्टिस्तावत् तादृशीं ज्ञानसङ्कल्पशक्तिमपेक्षते "या सम्भावनानन्त्यमध्यगता सती विशिष्टं विशिष्टं सम्बन्धं स्थापयति, बीजानि प्ररोहयति, सृष्टिविधानतरङ्गानुद्भावयति, शाश्वतिकानन्तद्रष्टृभावेन जगन्ति निरीक्षते, तद्विधशास्तृभावेन च शास्ति ।[४]

१ दि लाइफ डिवाइन, पृ० ३७१.

२. तस्मिन्नेव, पृ० १४४.

३. तस्मिन्नेव, पृ० ३१८-९.

४. तस्मिन्नेव, पृ० ३१९.

अतिमानसं त्वेवंविधमेव । तत् खलु सच्चिदानन्दस्थानामनन्तसृष्टिबीजानां मध्यतः तान्येव बीजानि प्ररोहोन्मुखानि करोति यानि तदभिप्रेतां व्यवस्थां प्रसारयितुं शक्नुवन्ति; चित्शक्त्योपजन्यानामनन्तप्रेरणानां मध्यतः ता एव प्रेरणाः स्वीकरोति याः तदीयं प्रयोजनं साधयितुं क्षमाः ।

अतिमानसस्य सम्भावनानिर्धारणव्यापारो नाम नास्ति कादाचित्को नैव सृष्टिबाह्यः । एष तु शाश्वतिकः, सार्वभौमः, सृष्टिप्रक्रियानुबद्धश्चास्ति । यदा किल सृष्टिः सच्चिदानन्दादाविर्भवति तदातिमानसमपि तथैव सह सर्वव्यापकत्वेनात्मानं परितनुते । अथ निखिलसृष्टिशीर्षस्थमप्येतत् प्रतिवस्त्वभ्यन्तरमवतिष्ठति । जडजीवनमनस्तत्त्वमयी सम्पूर्णापि सृष्टिः तद्व्याप्ता । तत्सन्निधानादेव पदार्थाः तं तं प्राकृतं विधानमनुसरन्ति । परमाण्वभ्यन्तरं परिक्रम्यमाणानां तदवयवानामतिद्रुतापि सती सुनियता गतिरनेनैव नियम्यते । एतस्यैव विवेको जडपदार्थेषु यान्त्रिकनियतिरूपेण, सरीसृपकीटपक्षिपश्वादिषु मूलप्रवृत्तिरूपेण, मानुषेषु च मनोरूपेण वर्तते ।

नन्वतिमानसेति पदेन नानुमेयमेतन्निर्दिष्टं तत्त्वं मनस एवोपबृंहितं रूपमिति । मानसातिमानसयोर्मध्ये हि मौलिको भेदोऽस्ति । मनस्तु विभाजनशीलम् । तत्तत्पदार्थरूपेण, तत्तद्घटनारूपेण च विभज्यैवैतत् संसारं द्रष्टुं शक्नोति । खण्डन-प्रखण्डनपूर्तिकैवैतस्य पदार्थावगतिः । अवयवसङ्घातमात्र एव पदार्थ इत्येतन्निर्णयः । जगत् खलु परमाणुसङ्घातोद्भवमित्येतस्येदानीन्तनं मतम् । सच्चिदानन्दमप्यधिकृत्यैतदेवमेव चिन्तयितुमर्हति । असौ तावत् सत्-चित्-आनन्दाभिधानां तत्त्वानां सङ्घातमात्रमित्येतस्य चरमोऽवबोधः । अतिमानसं चैतन्यं त्वेकत्वादेव बहुत्वोन्मुखं भवति । सच्चिदानन्द एक एव सन्ननेकानि रूपाणि धारयितुं क्षम इत्येतच्चैतन्यप्रतीतिः । एवमेवैतस्मिश्चैतन्ये जगत् सच्चिदानन्दाविर्भूतमिति प्रतीयते, न तु परमाणुसङ्घातमात्रसम्भूतमिति । पुनश्च, मनसो यथा देशावगतिराणविकी तथैव कालावगतिरपि वर्तमानक्षणमात्रपर्यवसायिनी । वर्तमानक्षणमात्रमेव हि मनोऽनुभूतिविषयं भवितुं शक्नोति । एतत्कृते भूतकालजातं स्मृतिमात्रावशिष्टम्, भाविकालजातं चानुमानमात्रविषयकम् । एतत्कृता वर्तमानक्षणानुभूतिरपीन्द्रियप्रदत्तसंवेदनाश्रिता भवति । अनुभूतेः क्षणमात्रपर्यवसायित्वाद् आणविकत्वाच्च मनः पदार्थं तत्सम्बन्धं चानुमानेनैवावगच्छति, न चापरोक्षम् । प्रवृद्धमानसशक्तिषु भूतविज्ञानवित्स्वपि मनस एतादृश एव व्यापारो दृश्यते । एतावता ज्ञायते यदत्युत्कृष्टमपि सन्मन एनं स्वभावं विहातुं न क्षममिति । अतिमानसं चैतन्यं तु सुतरां भिन्नस्वभावकम् । एतस्मिन् खलु न केवलं देशजातं

युगपदेवानुभूयते, अपितु निखिलः कालक्रमोऽपि शश्वद्वर्तमान इव प्रतीयते। यथा कस्मिंश्चित् चित्रफलके आलिखितं कालत्रयव्यापकं घटनासर्वस्वं युगपदेवदृष्टिगतं भवति, तथैवैतस्मिंश्चैतन्ये कालत्रयप्रसृता सृष्टिरेकपदे एव प्रतिफलति। अत्र तावद् देशकालयोः तात्त्विकोऽभेदः प्रत्यक्षदृष्टो भवति, न त्वनुमानमात्रविषयकः। अत्र देशो न वस्त्वाश्रयभूतः, कालश्च न घटनाश्रयभूतः। नैवैतौ वस्तुघटनासंयोगजन्यौ, न चान्योन्यपृथग्भूतौ। एतौ तु सच्चिदानन्दान्तर्हितसृष्टिसम्भावनाभिव्यक्त्यर्थं चित्शक्त्यङ्गीकृतौ विशिष्टावभिव्यक्तिप्रकारौ। ननु यस्मिंश्चैतन्ये देशः कालो जगच्चैवंविधान्यनुभूयन्ते, कथं नाम तेन मनस्स्वभावकेन भवितव्यम्? मनसि तावदतिमानसीयाः केचिद् धर्मा अन्वेष्टुं शक्यन्ते। तथा ह्येतस्मिन्नप्येकत्वमूलानां गोत्वादिसमष्टीनां प्रतीतिरुत्पद्यते। परन्त्वेतावता केवलमेतदेव सूच्यते यन्मनः यथाकथञ्चिदतिमानससम्बद्ध मिति। एष सम्बन्धस्तु कारणकार्यात्मक इति श्रीअरविन्दो मन्यते। तन्मतेनसत्-चित्-आनन्द-अतिमानस-जडतत्त्वेन-जीवात्म-मनोभेदेन तत्त्वजातमष्टविधम्। एतेषु तत्त्वेषु सत् तु जडतत्त्वस्य कारणम्, चित् जीवनतत्त्वस्य, आनन्दो जीवात्मतत्त्वस्य, अतिमानसं च मनस्तत्त्वस्य। किं तु यावदतिमानसं ज्ञानात्मकमस्तितावन्मनोऽज्ञानात्मकम्। अज्ञानात्मकत्वान्मनो वैकल्पिकं भवति। ज्ञानात्मकत्वादतिमानसं तु सत्तात्मकं यथार्थभूतं च।

ननु केचित् शङ्कन्ते यत् श्रीअरविन्दप्रतिपादितमतिमानसं नाम जर्मनदेशीयकविदार्शनिकश्रीनीत्सेप्रकल्पितातिमानवसदृशः कोऽपि काल्पनिकः प्राणीति। एतादृशी शङ्का त्वविचारितपूर्विकेत्युपपादयितुं शक्यते। श्रीनीत्सेप्रकल्पितातिमानवो हि प्रवृद्धाहंकारवान् कश्चित् प्राण्यस्ति। तच्छरीरमनोबुद्ध्यहंकारबलं नामेतरमानुषात् भृशं प्रवृद्धं मतम्। विशिष्टव्यक्तित्वाहंकारयोर्योगादेतादृशो जनः सर्वानपीतरान् जनानतिवर्तितुं प्रयत्नशीलः सन् स्वल्पायासेन कृतकार्यः स्यात्। अथासौ प्रकृत्यैव सङ्घर्षपरः प्रभुत्वपरश्च भविता। श्रीअरविन्दस्त्वेतादृशः प्राणिन आविर्भावं मानवविकासप्रतिलोमं मन्यते। एतस्याः प्रकल्पनायाः साक्षात्कारे सति मानवजातिः वर्तमानसंस्कृतेरप्यपच्युत्य प्राक्कालीनासभ्यावस्थां निवर्तिष्यते इति तन्निष्कर्षः।[५] अतिमानसं तु नैतद्विधम्। एतस्मिन् त्वहंकारस्य सद्भाव एव नास्ति, का पुनर्वार्ता तद्वृद्धेः। एतस्मिंश्च द्वित्वमेव नास्ति, का पुनर्वार्तान्यतमेनेतरेषां दमनशासनयोः। "एतस्मिन् विस्तृते ज्ञाने किमपि स्वतन्त्रं सत्ताकेन्द्रं नास्ति, अस्मादृशः कश्चिद् वैयक्तिकोऽहंकारोऽपि नास्ति। एतस्मिन्नात्मचैतन्ये तु निखिलापि सत्ता सम्प्रसारात्मिका, एकत्वे एका, नानात्वे एका, सर्वत्र सर्वथा चैका। अत्र समष्टि-

---

५. तस्मिन्नेव, पृ० १२६९.

व्यष्टी समसत्ताके स्तः । व्यष्टिर्न त्वितराभिर्व्यष्टिभिर्नैवाद्वयतत्त्वेन सहात्मैकात्म्यचैतन्यं जहाति, नापि हातुं शक्नोति, अतिमानसचैतन्ये तदैकात्म्यस्य निष्ठत्वात् ।"[६]

पुरापि कैश्चिन्महर्षिभिरतिमानसं ज्ञातमिति श्रीअरविन्दो मन्यते । एतेषु महर्षिष्वसौ वेदर्षीन् सविशेषमुदाहरति । ऋत्चिदितयपरमतिमानसाभिधानं तेन वेदादेव गृहीतम् ।[७] वेदेष्वेतत् 'तुरीय चैतन्य, इत्यपरनामधेयमित्यसौ मन्यते । अतिमानसचैतन्यस्य तुरीयत्वं खल्वत्रारोहारोहोभयक्रमाभ्यां सङ्गतम् । अवरोहक्रमापन्नं तुरीयत्वं नामैतस्य सत्-चित्-आनन्दपूर्वकत्वे बोध्यम्, आरोहक्रमप्राप्तं तुरीयत्वं तु जड-जीवन-मनस्तत्त्वपूर्वकत्वे ।[८] 'उरु ज्योतिः', 'अभयं ज्योतिः,' 'महज्ज्योतिः', परमे व्योमन्' इत्यादिभिर्बहुभिरन्यैर्ऋक्पदैरप्येतदेव निर्दिष्टमित्यसौ निश्चिनोति । उत्तमज्योतिर्मयत्वात्, अनन्तरश्म्युद्गमभूमित्वाच्च ऋग्वेदीयः सूर्योऽपि तन्मतेनातिमानसमेव प्रतीकायते । अपरं च, ऋग्वेदीयपुरुषसूक्ते पुरुषस्य ये चत्वारः पादा उल्लिखिताः तेषु यैः त्रिभिरसावूर्ध्वमुदैत् ते खलु सत्-चित्-आनन्दात्मका भवितुमर्हन्ति, येन तुरीयेन चासौ विष्वगभवत् स त्वतिमानसकल्पः प्रतीयते ।[९] अथैतेष्वतिमानसचैतन्यावबोधनिदर्शनेषु सत्सु, अनपलाप्यं स्याद् यद् वेदर्षिभिरतिमानसं चैतन्यमवगाहितमिति । परन्त्वेतादृग्विकीर्णसङ्केतव्यतिरिक्तम् अतिमानसचैतन्यावबोधस्य सुव्यवस्थितं लक्षणं वेदेषु नगण्यप्रायमेव । एतस्माज् ज्ञायते यद् वेदर्षय एतच्चैतन्यमवगाह्याप्यधस्तादवतारयितुं न शेकुरिति । अत्रैव श्रीअरविन्दः तेभ्यो विशिष्यते ।[१०] असौ न केवलमतिमानसं चैतन्यमारुरोह, परं च तद् भूमाववतारयितुमपि शशाक ।

परवर्तिविचारधारायां काश्मीरशैवदर्शनशास्त्रे यत् सदाशिवतत्त्वस्य स्वरूपं निर्दिष्टं तत् खलु श्रीअरविन्दाभिमतातिमानसस्यातिसन्निकृष्टं प्रतीयते । श्रीअभिनवगुप्तो मन्यते यत् "प्रकाशस्य यदात्ममात्रविश्रमणम् अनन्योन्मुखस्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽहमित्युच्यते" तत् शिवतत्त्वम्, यस्तु "अहमिदम्" इति विमर्शः स "सदाशिवनाथ इति ।" अहम्-इदं- तत्त्वसाम्यविशिष्ट एष द्वितीयो

६ तस्मिन्नेव, पृ० १६४५.

७. तस्मिन्नेव, पृ० १३९.

८. तस्मिन्नेव, पृ० ३१९-२०.

९. ऋग्वेदे, १०।९०.३.

१०. श्रीअरविन्दस्य, लेटर्स ऑन योग, द्वितीये भागे, पृ० १०२.

विमर्शः "समधृततुलापुटन्याय" इति परिभाषितः।[११] एतल्लक्षण एष सुतरामतिमानस-कल्पो मन्तव्यः। परं तु यावत् श्रीअरविन्दोऽतिमानसतत्त्वं भूमाववतारणीयं मन्यते तावदेते शैवाः सदाशिवतत्त्वं कैश्चिद् विशिष्टैः साधकैरेव प्राप्यं मन्यन्ते, न च कथमपि 'इदम्' तत्त्वे सामस्त्येनावतारणीयम्। एतावता ज्ञायते यद् सुदीर्घकालाद् भारतीय-विचारधारायामुद्भावितोऽतिमानसप्रत्ययः श्रीअरविन्ददर्शनशास्त्रे एव यथेष्टं वैशद्य-मवापेति।

---

११—श्रीअभिनवगुप्तस्य, ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्, ३.१।१.

## चतुर्थोऽध्यायः

# अवरोहप्रक्रिया

अस्मिन् युगे भौतिकविज्ञानेन स्थाप्यते जगद् विकासशीलमिति। विकासक्रमेणात्र जडतत्त्वाच्चैतन्यस्याविर्भावो दृश्यते। जडचेतनतत्त्वे त्वेतरेतराभ्यामतिभिन्नप्रकृतिके स्तः। एवं सति, कथं नाम जडतत्त्वाच्चेतनतत्त्वमुत्पद्यते? पूर्वतरं तु सर्वातिशयचैतन्यमय ईश्वर एव स्वेच्छया निरुपादानं जगत् ससर्जेति मन्वानैरीश्वरकारणवादिभिरनायासेनैवैष प्रश्नः समाधित्सितः। इदानीं त्वेतस्य मतस्य ग्रहणं न कथमपि सुकरम्। कार्यकारणसम्बन्धानुशीलनराहित्याद्ध्येतन्मतमतर्कसङ्गतं प्रतीयते।

एतद्विषयेऽपरं मत भौतिकविज्ञानप्रस्तावितयन्त्रवादपरमस्ति। यथा सहकार्यशीलानामवयवानां क्रियया किञ्चिद् यन्त्रं शक्तिमुत्पादयति, तथैवात्मचालितया प्रकृत्यापि चैतन्यमुत्पादितं स्यादित्युपस्थाप्यते भौतिकविज्ञानविद्भिरनुमन्यते च कैश्चिद् दर्शनविद्भिः। परमार्थतस्त्वेतन्मतं मिथ्यासादृश्याश्रयं प्रतीयते। स्वावयवानां क्रियया स्वावयवव्यतिरिक्तस्य पदार्थस्योत्पादनं खल्वेतस्य सादृश्यस्याधारभूमिः। तत्तु यथा यन्त्रस्य परिचलनात् शक्तिरुत्पद्यते तथा जगतः परिचलनाच्चैतन्यमुत्पद्येत नाम। एतस्य सादृश्यस्य मिथ्यात्वं त्वेतद् यदस्मिन् कारणकार्ययोरैक्यविभेदावनवहितौ स्तः। तथा हि, यन्त्रोत्पन्ना शक्तिस्तत्त्वतो यन्त्रद्रव्यभिन्ना न भवति। घनीभूय स्थैय गता शक्तिर्हि जडपदार्थरूपेण परिणमते। अथ चेत् शक्तिपरिणामोपजातो जडपदार्थः पुनरेव शक्तिमुत्पादयेत् तर्हि किमाश्चर्यम्? तत्कृते त्वेतत् नैसर्गिकमेव। चैतन्यं तु न कथमपि यन्त्रोत्पन्नशक्तिसदृशम्। किञ्चिदपि यन्त्रं कथमपि चैतन्यमुत्पादयितुं न क्षमम्। वस्तुतस्तु यन्त्रशक्तिसादृश्यं चैतन्यस्य जडपदार्थजन्यत्वस्थाने जडपदार्थस्य चैतन्यजन्यत्वमेव लक्षयति। यथा हि शक्तिजन्यत्वादेव यन्त्रनिर्माणविनियुक्तो जडपदार्थः शक्तिमुत्पादयितुं क्षमः, तथा चैतन्यजन्यत्वादेव जगता चैतन्योत्पादकेन भवितव्यम्।

ननु जडपदार्थस्यामूलचैतन्यजन्यत्वस्वीकृतिं विनापि प्रकारान्तरेणैव तज्जन्यत्वं साधयितुं शक्यते। तथा हि प्लेटो इति नाम्ना ग्रीसदेशीयेन दार्शनिकेन जागतिकं चैतन्यं व्याख्यातुं प्रतिबिम्बवादोऽवलम्बितः। यथा खलु सूर्यरहितं जलं सूर्यप्रतिबिम्बसद्भावात् सूर्यमयमिव प्रतीयते, तथासद्भूतं जगत् सत्तत्त्वप्रतिबिम्बं गृहीत्वा सन्मयं चिन्मयं च भवति। नन्वेष प्रतिबिम्बवादो जगन्मिथ्यात्वप्रतिपादनपरत्वादग्राह्यः।

एषैवापत्तिः श्रीशङ्कराचार्यप्रतिपादितमद्वैतवादमप्यधिकृत्योपस्थापयितुं शक्यते। एनामेवापत्तिं परिवर्जयितुम् अरिस्टाटिल इति नाम्ना अपरेण ग्रीसदेशीयेन दार्शनिकेनाधःस्थितजडतत्त्वस्योपरिस्थितेश्वराभिमुखमाकृष्टत्वात् तद्गुणानामात्मसात्करणाच्च जगतश्चैतन्यमयत्वमुपजायते इति प्रतिपादितम्। एतन्मतमपि मूलतत्त्वविभाजनपरत्वादग्राह्यम्। एषैवापत्तिः सांख्यमतस्याप्यग्राह्यत्वं दर्शयति। अपरं च, कैश्चिद् भौतिकविज्ञानविद्भिर्वर्तमानशताब्द्याः प्रथमे चरणे पृथिवीस्थं जीवनतत्त्वमधिकृत्य परिकल्पितं यदेतस्यां जीवनोत्पादकतत्त्वस्यातिन्यूनत्वादेतद् ग्रहान्तरागतं स्यादिति। ग्रहान्तरागमनकाले एतत् तत्त्वं कथं खलु विनाशकेभ्यः किरणेभ्योऽभिरक्षितमित्येनां समस्यां समाधातुं केचिद् विज्ञानविदोऽद्यापि प्रयत्नशीलाः सन्ति। ननु कथञ्चिदपि रक्ष्यमाणं जीवनतत्त्वं ग्रहान्तरागतं भवेत्, प्रश्नस्त्वेष यत् तस्मिन्नेव ग्रहे तत् तत्त्वं कुतः समागतं कथं वोत्पन्नमिति। एतस्मिंस्तत्त्वे तस्मादेव ग्रहादुत्पद्यमाने सति पुनरेव प्रष्टुं शक्यते कथं नाम तत्रैव जडतत्त्वाज्जीवनतत्त्वमुत्पन्नमिति। ग्रहान्तरागमनवादे स्वीकृते सति तु प्रश्नो जायते कस्माद् ग्रहान्तरात् तत् तत्रागतमिति। जीवनतत्त्वं खलु चैतन्याश्रयभूमिः। अथैतस्य तत्त्वस्य संक्रमणमुत्पत्तिश्च चैतन्यस्य संक्रमणमुत्पत्तिं च लक्षयतः।[1]

अनेन विवेचनेन स्पष्टं भवति यत् चैतन्योत्पत्तिविषयको ग्रहान्तरागमनवादोऽपि तथैवासङ्गतो यथेतरे वादाः। क्वचिदपि स्थितं जडतत्त्वं चैतन्यस्यात्यन्तिकं कारणं भवितुं न शक्नोति। अथ चेत् चैतन्यं जडतत्त्वादुत्पद्यमानं दृश्यते तर्ह्येतेन तस्मिन् पूर्वसन्निविष्टेन भवितव्यम्। यद्धि यत्र नास्ति तत् तत आविर्भवितुं न शक्नोति। अथ चेदेवं मन्येत यत् जडचेतनतत्त्वे परमार्थतोऽन्योन्यस्वतन्त्रे इति तदपि न ग्राह्यम्, द्वैतापत्तिप्रसङ्गात्। आत्यन्तिकस्य तत्त्वस्य द्वित्वं ह्यज्ञानप्रसूतं स्यात्, न तु पारमार्थिकम्। अथ चेत् जडतत्त्वादेव चैतन्यस्यात्यन्तिकीमुत्पत्तिं स्वीकुर्यात्, तर्ह्येकतो यन्त्रसिद्धान्तः परिबाधितो भवेत्, अपरतश्च कारणकार्यसम्बन्धवादः। यन्त्रसिद्धान्तस्तु प्रागेव निराकृतः। कारणकार्यसम्बन्धानुसारं तु यः पदार्थो यस्मात्पदार्थादुत्पन्नो भवति असौ तत्पदार्थव्याप्योऽपि भवति। तथा हि, अब्जाता भूमिरब्व्याप्या भवति; तेजोजाता आपो तेजोव्याप्या भवन्ति; वायुजातं तेजो वायुव्याप्यं भवति; आकाशजातो वायुराकाशव्याप्यो भवति। अन्यथा तु न भवति। एवं सति, जडतत्त्वं जीवनतत्त्वव्याप्यत्वात् तदुत्पन्नं स्यात्, जडजीवनतत्त्वे च चैतन्यव्याप्यत्वात् तदुत्पन्ने स्याताम्।

ननु श्रीअरविन्दमतानुसारं सच्चिदानन्दस्वरूपं चैतन्यं किमर्थं कथं च जडतत्त्वरूपेण परिणमते? अत्र स्मरणीयं स्याद् यत् स्थितिगतितत्त्वद्वयातिक्रान्तत्वात् सच्चिदानन्द

१. दि लाइफ़ डिवाइन, पृ० २२१.

उभयात्मक इति। अथ यावत् स्थितितत्त्वात्मकत्वादसौ सदानन्दस्वरूपः, तावद् गतितत्त्वात्मकत्वात् परिणामानन्दोन्मुखः। तस्य परिणामानन्दोन्मुखत्वमेव सृष्टेः कारणम्। पर त्वेवं सत्यप्यसौ किमर्थमेतादृगेव जगत् सृजति, नान्यप्रकारकम्? अत्र श्रीअरविन्दः स्थापयति यत् सच्चिदानन्दस्यानन्त्यात् तदीयाभिव्यक्तिरप्यनन्तरूपाणि धारयितुं शक्नोति। तत्कृते नानिवार्यं यदसौ जडत्वमवरुह्यैवात्मानं प्रकाशयेत्। असौ त्वेतद्विपरीतक्रममपि जगत् स्रष्टुमर्हति यस्मिन् तदीयमेकत्वं चिन्मयत्वमानन्दमयत्वं चाव्यवहितभावेनाभिव्यञ्जितानि स्युः, यस्मिश्चित्शक्तिः स्वेनैव रूपेण क्रियाशीला स्यात्, न तु जडशक्तिरूपेण जीवनशक्तिरूपेण वा, यस्मिश्चातिमानसमारम्भत एव प्राधान्यं लभेत।[2] दृश्यमानजगद्व्यतिरिक्तमेतादृगपि जगद् वस्तुतो विद्यते यस्मिन् सच्चिदानन्द आत्मानमव्यवहितरूपेणाविर्भावयति, यस्मिन् पदार्थजातं ज्ञानमयं पूर्णं स्थित्यात्मकं च भवति, यस्मिंश्चामिश्रित आनन्दोऽनुभूयते।[3] वेदोपनिषत्स्वप्येतादृशो लोको बहुश उल्लिखितः। परं त्वेतादृशो लोकः सच्चिदानन्दस्यात्माभिव्यक्त्याकाङ्क्षां परिणामानन्दानुबुभूषां च सम्यक् पूरयितुं न क्षमः। तस्यात्माभिव्यक्तिर्हि तदैव पूर्णत्वं गन्ता यदा गतितत्त्वं तद्विधं प्राधान्यं लभेत यद्विधं प्राधान्यमुच्चतरे लोके स्थितितत्त्वाय सुलभम्, तत्परिणामानन्दश्च तदैव चरमोत्कर्षं प्राप्नुयात् यदा सदानन्दः शून्यप्राय इव प्रतीयेत। एतन्निमित्तमसौ स्वम् आनन्दं निरानन्दत्वेन, चित् जडत्वेन, सत् चासत्त्वेन परिणयति।

एनं विपर्यासं त्वसावात्मस्वरूपतिरोधानेनाभिगन्तुमर्हति। अथ यथा केनचित् समाध्यभिमुखेन योगिना स्वानीन्द्रियाणि मनसि निलीयन्ते, मनो बुद्धौ, बुद्धिश्चैतन्ये, चैतन्यमात्मनि, आत्मा चानात्मनि, तथैवावरोहाभिमुखेन सच्चिदानन्देन स्वीय आनन्दश्चिति विलीयते, चित् सति, सत् चासति।[4] एवं विलीयमानः सच्चिदानन्दः तादृशीमवस्थामवरोहति यस्यां तत्त्वजातमभावात्मकमिव प्रतीयते। तत्र न केवलं चिदानन्दयोः, अपितु सतोऽपि लोपः प्रतिभाति। श्रीअरविन्दस्तु मन्यते यदेषावस्था ऋग्वेदीये नासदीये सूक्ते सम्यग्विवृता वर्तते। एष सूक्तः सृष्टिपूर्वामवस्थां सदसद्विलक्षणाम्, देशकालाभ्यामपरिच्छिन्नाम्, अज्ञानात्मिकाम्, निगूढाद्वैततत्त्वां च व्याचष्टे।[5] एतस्याः तिरोहितनिखिलतत्त्वाया अवस्थाया जगत उत्पद्यमानत्वान्न कथञ्चिदनुमेयं

---

२ तस्मिन्नेव, पृ० ६३७-८.

३. तस्मिन्नेव पृ० ८१२

४. तस्मिन्नेव पृ० १३१-२.

५. ऋग्वेदे, १०।१२९।१-३.

यदेषा परमार्थतोऽभावात्मिकेति। एतस्याः पारमार्थिकेऽभावात्मकत्वे तु जगत उत्पत्तिरेव न सम्भाव्येत। न हि कथञ्चिदसतः सदुत्पत्तुमर्हति।

सच्चिदानन्दस्यैष व्यापारः प्रलयात्मकः प्रतीयमानोऽपि न कथमपि निरुद्देश्यो मन्तव्यः। न हि चिन्मयः सन्नसौ जडवदज्ञानिवद् वा निरुद्देश्यं प्रवर्तितुमर्हति। तदीय आत्मतिरोभावस्त्वात्माभिव्यक्तिनिमित्तक इति बोद्धव्यम्। आत्माभिव्यक्तिनिमित्तं तावदात्मलयो निसर्गापेक्ष्यः। एतादृशं सर्जनात्मकमात्मलयं श्रीअरविन्दः 'तप' इति पदेनाभिधत्ते। ब्राह्मणग्रन्थेष्वपि सिसृक्षोः प्रजापतेरात्मलयलक्षणं तपश्चर्च्यते। सिसृक्षवः कवयः कलाकाराश्चापि सर्जनस्य प्रागात्मलीना भवन्ति। अथ यथा कश्चित् कविः कलाकारो वा आत्माभिव्यक्त्यै आत्मलीनो भवति, तथैव सच्चिदानन्दोऽप्यात्माभिव्यक्तिनिमित्तमेवैतद्विध स्वरूपविपर्यासं व्रजति। यथात्माभिव्यक्तिनिमित्तमात्मलीनस्य कवेः कलाकारस्य वा न किञ्चिदपहीयते, तथैव सृष्ट्यर्थमात्मनिविष्टस्य सच्चिदानन्दस्याप्येतेन व्यापारेण कश्चिदपक्षयो न भवति। यथा चात्मलीनः कविः कलाकारो वैतद्व्यापारपूर्वकमात्मनिहितान् भावान्नुद्घाटयति, तथैवावरूढः सच्चिदानन्दोऽवरोहव्यापारपूर्वकमात्मनिष्ठाः सम्भावना जगद्रूपेणाविर्भावयति।

एषोऽवरोहव्यापारो नास्ति कादाचित्कः। सच्चिदानन्दस्तावदेकस्मिन् काले आत्मानं विस्मार्याधस्तादवक्षिपति, कालान्तरे च शनैश्शनैरुत्थापयतीति खलु नानुमेयम्। तथा सति, अवरोहकाले आरोहव्यापारस्य परमार्थतत्त्वस्य चाभावः प्रसज्येत; आरोहकाले अवरोहव्यापारस्य परमार्थतत्त्वस्य च; परमार्थस्थितौ चावरोहारोहात्मकस्य जगतः। केचिद् वेदान्तिनस्त्वेवमेव मन्यन्ते। तथा हि, श्रीरामानुजाचार्यः कारणकार्यविभेदेन ब्रह्मणो द्विरूपत्वं प्रतिपादयति।[६] तन्मतेन "सर्वात्मभूतं परं ब्रह्म कदाचिद् विभक्तनामरूपम्, कदाचिच्चाविभक्तनामरूपम्; यदा विभक्तनामरूपम्, तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते; यदा चाविभक्तनामरूपम्, तदा एकमद्वितीयं कारणमिति।"[७] ब्रह्मणः कारणावस्थायाः कार्यावस्थायां विपरिणाममसौ जीवकृतकर्मफलभोगानिमित्तकं मन्यते। ब्रह्म खलु जीवकृतकर्मफलभोगार्थं जगत्सृजति, भोगनिवृत्तौ त्वेतत् संवृणोतीति तस्य सिद्धान्तः। तन्मतेन नासदीयसूक्तगतं "तम आसीत् तमसा गूढमग्रे" इत्येतद् वाक्यं तु प्रलयकालबोधकम्। अपरं चासावेतत्सूक्तगतं 'सत्' इति पदं चिद्बोधकम्, 'असत्' इति च पदमचिद्बोधकं मन्यते।[८]

६. श्रीभाष्ये, १.२.१.

७. तस्मिन्नेव, १.२।१.

८. तस्मिन्नेव, १।१।१

श्रीअरविन्दस्तु 'सत्', 'असत्', 'तम'श्चेत्येतानि त्रीण्यपि पदानि न खलु जगतो विलयावस्थाया वाचकानि प्रत्युत सच्चिदानन्दावरोहोपजातसृष्टिभूमिकाया बोधकानीति निश्चिनोति। एतस्मान्मतभेदाद् यावत् श्रीरामानुजाचार्यः प्रलयपरं मतं प्रतिपादयति तावत् श्रीअरविन्दोऽवरोहपरम्। यावत् प्रलयो जागतिकविलयस्य बोधकः तावदवरोहः सच्चिदानन्दीय-सिसृक्षायाः। नासदीयसूक्तस्य प्रामुख्येन संसारोत्पत्तिविषयकत्वात्, श्रीअरविन्दप्रस्तावितं व्याख्यानं सुष्ठुतरं प्रतीयते। एवं सति, कादाचित्कसृष्टिप्रलयवादः श्रुतिप्रामाण्यभावादनवकाशो भवति। अपरं च, कादाचित्कसृष्टिप्रलयवादे मते सति, ब्रह्मणः कालावच्छिन्नता आपतति। कालावच्छिन्न सदेव तत् कदाचित् स्रष्टुं कदाचिच्च सृष्टिं विलोपयितुमर्हति। ब्रह्म तु कालानवाच्छिन्नमिति श्रुतिः। अथ तद्व्यापारजातस्य कालावच्छिन्नता नानिवार्या। कालानवच्छिन्नत्वाच्च तत् कालेऽप्यात्मानमभिव्यञ्जयितुमर्हति, अतिकालमपि। कालातीतत्वात् तु सृष्टिप्रवृत्तिः कालेनोच्छेत्तुं न शक्यते। अनेन प्रकारेण श्रुतितर्काभ्यामवरोहव्यापारस्य कादाचित्कत्वमपनुद्यते। सच्चिदानन्दीयचित्शक्तेरानन्त्यादेष व्यापारोऽप्यनन्तो निरन्तरः शाश्वतश्च मन्तव्यः।

शिवतत्त्वात् सांसारोत्पत्तिनिरूपणक्रमेण काश्मीरैः शैवैरप्यवरोहव्यापारोऽवलम्बितः। तेषां मतेन शिवस्तावत् स्वतन्त्रः, चिन्मात्रः, पूणः निराकाङ्क्षश्च। एतादृशोऽसौ बहिरुल्लसितुमिच्छन् यदा सर्वनिरपेक्षो भूत्वा अहमिति परामृशति तदा 'परमशिव' इत्युच्यते। तदीय एष परामर्शो बहिरुल्लसन् 'अहमिदमि' त्येतेन भावेन प्रस्फुटति। एतदवस्थं शिवतत्त्वं 'सदाशिव' इत्युच्यते। एतदनन्तरम् 'इदमहमि' तिपरामर्शो जायते। एतदवस्थं शिवतत्त्वम् 'ईश्वर' इत्यभिधीयते।[१] एतेभ्यः शैवेभ्योऽपि पूर्वतरं 'तत् सृष्ट्वा तदेवानुप्राविशत्' इत्यादिष्वौपनिषदवाक्येषु सृष्टिव्याख्यानक्रमेणावरोहव्यापार उपाश्रितः। एतान्येव वाक्यान्याश्रित्य कैश्चिद्वेदान्ताचार्यैरप्यवरोहव्यापारस्याभासो लब्धः। परं तु यावदेतैराचार्यैरवरोहारोहशीलयोस्तत्त्वयोः रज्जुसर्पसूर्यरश्मि-आत्मशरीरप्रभृत्युदाहरणमुखेन द्वैताद्वैतनिर्धारणे एव प्रामुख्येन पर्यवसितं, यावच्च शैवैरहमिदं प्रत्यययोरन्योन्यसम्बन्धमुखेनैषा प्रक्रिया किमप्युद्भाविता उपपादित च, तावत् श्रीअरविन्देन योगानुभूतिमाश्रित्य इतरदर्शनसिद्धान्तपरामर्शपूर्वकम्, सोपपत्तिकं चैषा सम्यक्प्रकारेण सिद्धान्तकोटिमानीता।

———

१. श्रीअभिनवगुप्तस्य, ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्, पृ० १-२.

पञ्चमोऽध्यायः

# आरोहप्रक्रिया

अवरोहव्यापारे परां काष्ठां गते सति आरोहः प्रारभते। अवरोहपराकाष्ठा खलु निरानन्दलक्षणा, अचिन्मयी, असद्भूता च प्रतीयते। परमार्थतस्तु सच्चिदानन्दात्मकत्वात् तयाप्यानन्दात्मिकया, चिन्मय्या, सद्भूतया च भवितव्यम्। अथावरोहस्यारोहनिमित्तत्वात्, आत्मलीनमपि सत्-चित्-आनन्दजातमिदानीमुन्मुखं भवति। एतस्मिन्नुन्मुखीभावे त्वतिमानसं नेतृत्वेनोपकरोति चित्शक्तिश्च वाहकत्वेन। अन्तर्हितमतिमानसं हि सुषुप्तप्रायं तत्त्वजातं स्वरूपोपलब्ध्यर्थमुद्बोधयति। अथ निगूढा चित्शक्तिरुद्बुध्य सच्चिदानन्दं भाविविकासपथे उन्नेतुं यतते। चित्शक्तेरेष प्रयासः प्रथमं तावद् देशकालाकारत्वेन परिणमते। एतौ ह्येतच्छक्तेरात्माभिव्यक्त्याकारभूतौ, न तु स्वतन्त्रौ, आरोहारम्भपूर्वमेतयोरभावात्; नैव जडपदार्थतन्त्रौ, तदुद्भवप्रागप्येतयोः सद्भावात्। अनेन प्रकारेणारोहोन्मुखमवरूढं तत्त्व देशकालमात्राकारितं सन् निर्विशेषायामत्वेनाविर्भवति। एष आयामः किल वेदेष्ववरसमुद्ररूपेणोल्लिखित इति श्रीअरविन्दो मन्यते। एष च प्रामुख्येन सच्चिदानन्दान्तर्गतस्य सत्तत्त्वस्य विशिष्टाभिव्यक्तिः। देशकालयोरत्रान्योन्याभ्यामविविक्तत्वादेष आयामोऽविच्छिन्नाकारो भवति। अथ यथा समुद्रादूर्मिजालमुद्गच्छति, तथैवैतस्मादायामाद् विकासक्रमेण शक्तिरुपजायते। चित्तत्त्वस्य सम्प्रत्यप्यनभिव्यक्तत्वादेषा शक्तिस्तु जडत्वलक्षणा भवति। अथैकत्वानेकत्वमध्यस्थमतिमानसं सच्चिदानन्देप्सितमनेकत्वमाविष्कर्तुमोनं जडशक्तिविस्तारं विच्छेदोन्मुखं करोति। परिणामत एकरूपा जडशक्तिरनेकरूपानसंख्यान् परमाणूनुत्पादयति।

जडशक्तिजातोऽपि परमाणुः, तत्त्वतः सच्चिदानन्दमयत्वात्, कालक्रमेण स्वान्तस्तलाज्जीवनतत्त्वमुपजनयति। जडतत्त्वं तु सच्चिदानन्दान्तर्गतस्य सत्तत्त्वस्य प्रतिरूपम् जीवनतत्त्वं च तदीयचित्तत्त्वस्य प्रतिरूपम्। पुनश्च, कालान्तरे तस्मादेव जीवनतत्त्वात् चैत्यपुरुषाख्यं तत्त्वमुपजायते। चेत् परमाणवो जडतत्त्वमुपनिबध्नन्ति, वनस्पतयश्च जीवनतत्त्वम्, तर्ह्यवरप्राणिवर्गश्चैत्यपुरुषतत्त्वम्। चैत्यपुरुषतत्त्वं नाम सच्चिदानन्दान्तर्गतस्यानन्दतत्त्वस्य प्रतिरूपम्। अथ ज्ञायते यदारोहक्रमोऽवरोहक्रम प्रतिलोम इति। अवरोहक्रमे ह्यानन्दतत्त्वं तावत् सर्वप्रथमं लीयते, तदनन्तरं चित्तत्त्वम्

अथ च सत्तत्त्वम्। आरोहक्रमे तु सत्तत्त्वं सर्वप्रथममाविर्भवति जडतत्त्वरूपेण, तदनन्तरं चित्तत्त्वं जीवनतत्त्वरूपेण, अथानन्दतत्त्वं चैत्यपुरुषतत्त्वरूपेण। आरोहक्रमश्च चैत्यपुरुषतत्त्वानन्तरं मनस्तत्त्वमुत्पादयति। यावच्चैत्यपुरुषतत्त्वमवरप्राणिवर्गेणोपनिबध्यते तावन्मनस्तत्त्वमुच्चप्राणिवर्गेण। मानवश्च मनस्तत्त्वस्य चरमाधिष्ठानभूमिः। मनस्तत्त्वं त्वतिमानसतत्त्वप्रतिरूपं मतम्।

ननु सत्-चित्-आनन्दतिमानसेति पारमार्थिके तत्त्वचतुष्टये जड-जीवन-चैत्यपुरुष-मनस् इति जागतिकतत्त्वचतुष्टयरूपेणाविर्भूते सत्येवारोहव्यापारः स्वीयं चरमं लक्ष्यं स्पृशतीति किं न मन्यते? वस्तुतस्तु मनो नाम विकासप्रक्रियायाश्चरमं चरणमितीदानीं विदुषां सामान्यं मतम्। अथ सर्वप्रकारेण मन एव परिपोषणीयं संवर्धनीयं च; एतेनैव जन आत्यन्तिकं हितं साधयितुं क्षम इति तेषां निर्णयः।

मनो नाम विकासस्य चरमं चरणं भवितुं नार्हतीति तु श्रीअरविन्दः स्थापयति तन्मतेनैतत्तु केनचिच्चरणान्तरेण तथैवातिक्रमणीयं यथा पुरा जडतत्त्वं जीवनतत्त्वेनातिक्रान्तम्, जीवनतत्त्वं च मनस्तत्त्वेन। यथा कतिपयलक्षवर्षपूर्वं केनचिदपि पशुना नावगतं यदस्यां पृथिव्यां मानवसदृशो विज्ञानविदुत्पत्स्यते इति तथैवेदानीं सामान्यतः कोऽपि न प्रत्येति यदतः परं मनसोऽप्युन्नततरं तत्त्वान्तरमाविर्भवितेति। चेत् कतिपयलक्षवर्षेष्वेवैतस्यां पृथिव्यां जडतत्त्वाज्जीवनतत्त्वमुद्भूतं जीवनतत्त्वाच्च मनस्तत्त्वम्, तर्हि किमाश्चर्यं यद्यागामिकाले मनसोऽप्युन्नततराणि तत्त्वान्याविर्भवेयुः। ज्योतिष-भूगर्भशास्त्र-जीवविज्ञान-नरविज्ञानेतिहासप्रभृतिशास्त्राणां परामर्शेन ज्ञायते यज्जगद् विकासशीलमिति। विकासक्रमेण यथा साम्प्रतं नवनवतत्त्वानामुन्मेषः संजातः, तथैवातः परमपि स्यादिति तु निश्चितप्रायम्। एवं सति, इदानीं तु प्रश्न एतावन्मात्र एव यदागामिनी विकाससरणिः कीदृशी भवितेति।

एतस्मिन् भाविविकाससरणिनिर्धारणव्यापारे मनसः स्वरूपपरीक्षा किमप्यवबोधं जनयितुमर्हति। मनस्तावन्नैकविधम्। एतत्त्वनेकसोपानकम्। एतस्याधस्तनं सोपानं तु जडतत्त्वप्रधानं मन्यते, मध्यमं सोपानं जीवनतत्त्वप्रधानम्, उपरितनं सोपानं च मानसतत्त्वप्रधानम् ननु केचिन्मन्यन्ते यदेते मनोविभागा युगपदुत्पन्ना इति। श्रीअरविन्दमतेन त्वेते खलु विकासानुक्रमोपजाताः।[1] तथा सति, निष्कर्षोऽयं जायते यन्मनोऽपि विकासशीलमिति। एष विकासक्रमस्तु जडतत्त्वाज्जीवनतत्त्वोन्मुखः, जीवनतत्त्वाच्च मानसतत्त्वोन्मुखः स्यात्, तथैव प्राकृतविकासक्रमप्रवृत्तेः। नन्विन्द्रियाश्रितत्वाद् भौतिकं मनो बहिर्मुखं भवति। जीवनतत्त्वप्रधानं मन अंशतो बहिर्मुखमंशतश्चान्तर्मुखं भवति। मानसतत्त्वप्रधानं मनस्तु प्राधान्येनान्तर्मुखं

---

१. दि लाइफ़ डिवाइन, पृ० ८५४-६.

भवति । मनसोऽन्तर्मुखता नाम जडचैतन्याभिमुखी प्रवृत्तिः । अतएव भाविविकासाशा तावद् अन्तर्मुखी, चैतन्याभिमुखी च भविता । नन्वेषाऽन्तर्मुखत्वलक्षणा चैतन्याभिमुखता मनस्सोपानादूर्ध्वमुत्थाय क्व गन्तेत्येतस्मिन् विषये श्रीअरविन्दः स्वां योगानुभूतिं निर्धारकत्वेनोपयोजयति । सामान्यजनसुलभमानससोपानातिक्रमणपूर्वकमसौ यान्यध्यात्मसोपानान्यारोहति तान्युच्चतरमनः, प्रकाशमानमनः, अन्तर्ज्ञानम्, अधिमानसम्, अतिमानसमित्यनुक्रमेणाभिधत्ते ।

सामान्यजनसुलभं मनस्त्वज्ञानानुलिप्तं भवति । एतस्मिन् खल्वज्ञानान्धकारादनुसन्धायानुसन्धाय ज्ञानलवा उपलभ्यन्ते, आलोचनप्रत्यालोचनाभ्यां परीक्ष्य परीक्ष्य च परस्परं संश्लिष्यन्ते । अत्र ज्ञानं तावदानुक्रमिकप्रत्ययनविधिलभ्यं भवति । उच्चतरं मनस्त्वज्ञानादुन्मिष्य ज्ञानाभिमुखं प्रवर्तते । अत्र ज्ञानं स्वयंप्रकाशं प्रत्यक्षं च भवति ।[२] उच्चतरमनोऽतिक्रमणपूर्वकं तु प्रकाशमानमन उपलभ्यते । एतत् खल्वध्मात्मप्रकाशलक्षणं मतम् । उच्चतरमनो नाम ज्ञानात्मकं सन्नपि प्रत्ययात्मकं भवति । प्रकाशमानमनस्त्वतिप्रत्ययनविधिमुपयुङ्क्ते । एतावता पुनर्नानुमेयं यत् प्रकाशमानमनःस्संस्थितो जनश्चिन्तनशून्यो भवतीति । चिन्तनं त्वत्रापि प्रचलति, किन्तु केवलमनुषङ्गेण ।[३]

प्रकाशमानमनस उपरिष्टादन्तर्ज्ञानाभिधमध्यात्मसोपानमुपलभ्यते । एतत् तु निगूढतादात्म्यचैतन्यादकस्मादुत्थितं ज्ञानम् । एतादृशं ज्ञानं तावद् विषयविषयिचैतन्यसंयोग-निर्विषयात्मान्तर्दर्शन-परमतत्त्वसाक्षात्कारजन्यत्वात् त्रिविधम् एतेषु तादात्म्यावसरेष्वेतत् स्फुलिङ्गवत् सहसोज्ज्वलति ।[४] संस्पर्शात्मकप्रत्यक्षजन्यत्वादेतत् चाक्षुषप्रत्यक्ष-प्रत्ययनाभ्यां गहनतरं भवति । अतएवैतन्महद्विप्रतिपत्तिविषयं प्रतीयते । मनस्यवतीर्य त्वैतदनपेक्षितैस्तत्त्वैः सह व्यामिश्रीभूयानेकविधं रूपं धारयति । एतस्मात्कारणादस्य स्वरूपनिर्धारणं दुष्कर भवति । केचिद् धर्मप्रवर्तकास्तु व्यामिश्रितमन्तर्ज्ञानमवलम्ब्य वैचारिकीं ज्ञानपद्धतिं साकल्येन तिरस्कुर्वन्ति । निम्नकोटिकमनोगृहीतत्वादेतादृशमन्तर्ज्ञानं प्रायशो भ्रमोत्पादकं भवति । वैचारिकपरीक्षणविरहादेतत् क्रियान्वितं भूत्वा जनानां कष्टायैव भवति । तदेवान्तर्ज्ञानं विश्वसनीयं क्रियायामन्वेयं च यत् खलु सविचारावधानं प्रकाशमानमनसि, उच्चतरमनसि चावतार्यते ।

---

२. तस्मिन्नेव, पृ० ११६.

३. तस्मिन्नेव, पृ० ११२४.

४. तस्मिन्नेव, पृ० ११२६.

अन्तर्ज्ञानस्याधिष्ठानादुपरिष्टात् त्वधिमानसनाम्नी अध्यात्मभूमिर्विद्यते। अन्तर्ज्ञानपर्यन्तमारोहणं तावद् वैयक्तिकं भवति। अधिमानसं प्राप्य त्वेतद् वैश्वरूपत्वंव्रजति। अहंकारविलयः, वैश्वचैतन्यविकासश्चैतत्प्रवेशसाधनम्।[५] एतत् खल्वन्तर्ज्ञान-प्रकाशमान-मन-उच्चतरमनःस्थितं निखिलं ज्ञानांशं संगृह्योत्थापयति। अत्रागत्य सर्वा अप्यध्यात्म-सम्भावना यथार्थ्यं व्रजन्ति।[६] अधिमानसं नाम व्यष्टिसमष्टिमध्यगतः सेतुः। अज्ञान-मयसृष्ट्यपरार्धस्थितानां प्राणिनां कृते ज्ञानमयपरार्धद्वारोद्घाटनम्, तत्प्रवेशसामर्थ्यप्रदानं चैतस्य कार्यम्। अधिमानसस्योपरिष्टादतिमानसनाम्नी भूमिर्विद्यते। अत्र तु ज्ञाता-ज्ञान-ज्ञेयानामभेदो जायते, व्यष्टिसमष्ट्योरेकत्वानेकत्वयोः सच्चितोश्च निखिलो भेदो विलीयते।

अथ सामान्यमनःपर्यन्तमुद्गत आरोहव्यापारोऽतःपरमनुक्रमेणैतास्वध्यात्मावस्था-सून्नेष्यते तदनुरूपां परिणतिं च लप्स्यते इति श्रीअरविन्दो मन्यते। नन्वत्र विप्रतिपत्ति-र्जायेत कथं नाम चैतन्यविषयक एष उत्कर्षोऽस्तित्वलक्षणस्यारोहव्यापारस्य पूर्वरूपमु-पस्थापयितुमधिक्रियेतेति। एनां विप्रतिपत्तिं श्रीअरविन्द एवं समाधत्ते। जगन्मूल-कारणभूते सच्चिदानन्दे सच्चितोरभेदात्, जगत्यप्येतयोस्तात्त्विकोऽभेदः स्यात्। या कापि भेदप्रतीतिः सा त्वज्ञानजन्मा। अवरोहोन्मुखः सच्चिदानन्दस्तावत् सच्चितौ तिरोदधाति। आरोहोन्मुखस्त्वसौ सर्वप्रथमं सत्तामाविर्भावयति ततश्चैतन्यम्। मनसि तु तादात्म्यबोधाभावादेते अन्योन्यविरोधशीले प्रतीयेते। एषा विरोधप्रतीतिर्मनसि प्रबलतमा। अधिमानसचैतन्यभूमिकासु तु यथा यथाऽज्ञानजवनिकाऽपसार्यते तथा तथाऽन्योन्यपृथगिव प्रतीयमाने सत्ता-चैतन्ये अन्योन्यमुपसरतः। एषाऽन्योन्याभिमुखगमन-प्रक्रिया तावदतिमानसतत्त्वे परिणतिं प्राप्य पुनरेवैतयोस्तादात्म्यं संस्थापयति। तादात्म्य-प्रक्रियाया आनुक्रमिकत्वात्, निम्नास्वप्यतिमानसचैतन्यभूमिकासु यत्किञ्चिदनुभूयते तेनापि सत्तात्मकेन भवितव्यम्। भेदस्त्वेतन्मात्र एव स्याद् यदेतास्ववरासु भूमिकास्व-नुभूतं चैतन्यमंशत एव सत्तात्मकं भवितुमर्हति। अपरं च, ज्ञानप्राचुर्यात्, एतद्गता अनुभूतयो मानसानुभूतिवद् भ्रमात्मिका भवितुं नार्हन्ति। मनसि त्वज्ञानप्राचुर्यात्, तत्प्रतीतं पदार्थजातं सत्तात्मकं भवितुं न शक्नोति। न खल्वस्मदीया भावनाः, कल्पनाः, विचाराः, स्वप्ना वा सर्वथा सत्तयाऽनुयुज्यन्ते। ऐतेष्वपि कश्चित् सद्-अंशो भवतीति त्वनपलाप्यम्। संकल्पविकल्पविवेकप्रभृतिभिर्मानसव्यापारैरेष एव सद्-अंशोऽन्विष्यते विविच्यते च। किं तु मानसचैतन्यगतः सद्-अंशस्तथैव यथा तमसाच्छिन्नः कश्चित्

५. तस्मिन्नेव, पृ० ११३०.
६. तस्मिन्नेव, पृ० ११३०.

स्पृहणीयः पदार्थः। उच्चतरमनःप्रभृतिषु चैतन्यभूमिषु तु शनैः शनैः प्रकाशेन तमसोऽपसृतत्वात्, सत्यान्वेषणमल्पतरयत्नसाध्यं भवति। अतिमानसचैतन्ये तु तमसो निश्शेषेणोन्मूलितत्वात् प्रकाशमात्रस्य चावशिष्टत्वात्, पदार्थोऽपि चैतन्यपरिणामविशेष इव ज्ञायते।

मनोऽतिक्रमणपूर्वकमुच्चतरचैतन्यसोपानेष्वारोहणाद् आगामिविकाससम्भावनावबोधे जाते सति सम्प्रति विचारणीयं भवति कथं खल्वेष विकासक्रमो याथार्थ्यं गमिष्यतीति। एतस्मिन् प्रसङ्गे तावत् प्राक्तनैर्मनीषिभिर्निर्दिष्टस्योपायस्य परामर्श उपादेयः स्यात्। योगिभिर्वेदान्तिभिश्च प्रायेण वैयक्तिको विकासो निर्दिष्टः। तथा हि, ये साधका अतिमानसीषु चैतन्यभूमिष्वारोक्ष्यन्ति ते व्यक्तिशः परमतावस्यैकत्वे स्थास्यन्ति यावदवशिष्टं जगत् सृष्टिकालावसाने प्रलयगर्भनिलीनं भूत्वा प्रलयकालावसाने पुनराविर्भविष्यतीति तेषां मतम्। एतन्मतं तावदधोनिर्दिष्टासु तिसृषु प्राक्कल्पनास्वाधृतं प्रतीयते। (१) ज्ञानिनोऽज्ञानिनश्चैकत्रैवावस्थातुं न शक्नुवन्ति। (२) प्रकृतिर्जीवश्चान्योन्यविविक्तौ स्तः। (३) केवलं चैतन्यमेव विकासमुपगन्तुमर्हति, न चावशिष्टं जगत्। अत्रानुक्तमेव स्पष्टं भवति यदेताः प्राक्कल्पना जगदैक्यमुच्छिन्दन्तीति। श्रीअरविन्दप्रदर्शिते मार्गे त्वेष उच्छेदः परिह्रियते। काचिद् व्याष्टिर्नाम मनोऽतिक्रमणपूर्वकमतिमानसपर्यन्तमारोढुं शक्नोतीति तावदसावपि मन्यते। परं त्वेतादृशमारोहणम त्वपूर्णमिति तन्मतिः। जगद्धि नास्ति कथमप्यसम्बद्धानां पदार्थानां सङ्घटनभूमिः। अत्रत्यः प्रत्येकं पदार्थ इतरैः सर्वैरपि पदार्थैः सह यथाकथञ्चित् सम्बद्धो विद्यते। अत्रत्या जीवा जडतत्त्वादुत्पद्यन्ते, जडतत्त्वं शक्तेरुत्पद्यते, शक्तिश्चास्ति चिन्मयी। चित्तत्त्वस्याद्वैतस्वरूपत्वात्, जडतत्त्वं चेतनतत्त्वेन सहाविनाभावेन सम्बद्धं स्यात्, प्रत्येकं जीवश्चेतरैः सर्वैरपि जीवैः। अथ कश्चिज्जीव एकाकी नुव अस्माज्ज् जगतो निर्गन्तुं न शक्नोति। तन्निर्गतिस्तु निखिलेन जगतैव सह सम्भाव्यते। नन्वेवं सति, मोक्षावस्थामारूढो जीवः किं करिष्यति? श्रीअरविन्दमतेन विकासक्रमोपजाता भूमिस्तावत् पूर्णत्वं प्राप्तुं नार्हति यावदवरां भूमिं किमपि नोत्थापयति। अथ मानसो विकासस्तावन्न पूर्णो भविष्यति यावज्जीवनभूमिर्मनसः पार्श्वे नोत्थापयिष्यते। एवमेवातिमानसो विकासस्तावदपूर्णो भविष्यति यावन्मनो नोत्थापयिष्यते। उच्चतरसृष्टिसोपानस्य निम्नतरसोपानकृते प्रतीक्षणं खलु विकासप्रक्रियायाः सर्वांशसामस्त्यं सूचयति।[७] विकासक्रमोपजातानां विविधावस्थानामन्योन्याश्रितत्वमन्योन्यापेक्षितत्वं सर्वांशसामष्ट्यं चावबोधयितुं श्रीअरविन्द औपम्येनैतादृशं सैन्य-

७. तस्मिन्नेव, पृ० ११३७.

मुदाहरति यस्य यावद् विभागविशेषः पुरस्सरणपूर्वकमभिनवां भूमिं स्वायत्तीकरोति तावन्मुख्यांश इदानीमपि तस्यामेव भूमौ विद्यते या, विजितापि सती, अनधिकृतास्ते पुनर्योजनमाश्वासनं चापेक्षते। विकासक्रमेण खलु कैश्चिज्जनैरवशिष्टाल्लोकादग्रे प्रसृत्य, सुदीर्घमप्यध्यात्माध्वानमतिक्रम्य प्रचुरमात्रायामभिनवा भूमिर्जेतुं शक्यते। परं त्वेष जयः "विदेशीयभूमौ शिविरस्थापनसदृशो विदेशीयराज्यव्यवस्थास्थापनसदृशो वा भविष्यति। न त्वेषोऽतिमानसस्वरूपोत्थापनार्थापेक्षितः स्वीकरणाङ्गीकरणतादात्म्यीकरणलक्षणो व्यापारो भविष्यति।"[८]

सृष्टिगतानां तत्त्वानामन्योन्यसम्बद्धत्वात्, अवरोहारोहव्यापारौ न केवलमानुक्रमिकावपितु व्युत्क्रमपरावपि भवतः। तद्यथा, आरोहव्यापारस्य सिद्ध्यर्थं न केवलं प्राचीन एवावरोहोऽपेक्ष्यते, अपित्वर्वाचीनोऽपि। प्राचीनावरोहव्यापारेण तु सृष्टौ जड-जीवनमनःप्रभृतीनि तत्त्वानि निधीयन्ते। परं त्वेतेषाम-तर्हितानां तत्त्वानामुत्थापनार्थं तत्तत्तत्त्वस्यार्वाचीनोऽप्यवरोहः सुतरामुपयोजनीयः। यथा जलप्रवाहाभिमुखमपि तरन्ती नौरिष्टं लक्ष्यं प्राप्तुं जलेन सह नाविकमप्यपेक्षते, तथैव सन्निहितसर्वतत्त्वः, चित्शक्तिप्रेर्यमाणश्चारोह इष्टलक्ष्यप्राप्त्यर्थं तत्तत्तत्त्वस्यार्वाचीनमप्यवरोहमपेक्षते। अथ जडतत्त्वाज्जीवनतत्त्वाविर्भावो दुस्साध्योऽभविष्यच्चेत् तस्मिन् जीवनतत्त्वस्यार्वाचीनोऽवरोहो नाभविष्यत्। एवमेव जीवनतत्त्वान्मनस्तत्त्वस्याविर्भावो दुस्साध्योऽभविष्यच्चेत् तस्मिन् मनस्तत्त्वस्यार्वाचीनोऽवरोहो नाभविष्यत्। इत्थमेवागामिकालेऽपि मनस्तत्त्वादधिमानसप्रभृतीनामाविर्भावार्थमेतेषामर्वाचीनोऽवरोहोऽनुक्रमेण तत्तत्सोपाने आवश्यकः स्यात्।[९] किं त्वेतावता किल नानुमेयं यदर्वाचीनमवरोहं विनाऽऽरोह एव न स्यादिति। प्राचीनावरोहसन्निधापितारोहतत्त्वसद्भावादारोहस्त्ववश्यम्भाव्येव। केवलमर्वाचीनावरोहं विनाऽऽरोहपथः प्रकारान्तरो भविष्यति, आरोहगतिश्च मन्दायिष्यते।[१०] नाविकं विनापि नौः प्रवाहशीले जले प्रवाहोन्मुखं तरत्येव। परं त्वेवं तरन्ती सा क्वचिदवरुद्धापि भवितुमर्हति, वक्रेणापि पथा गन्तुम्, मन्दायितुमपि।

नन्वर्वाचीनावरोहनिहितानि तत्त्वानि किंमूलानीति जिज्ञासा समुदेति। एतस्मिन् प्रसङ्गेऽवधेयं खलु यत् श्रीअरविन्दमते नास्त्ययमेव लोकः, अपितु विविधितत्त्वानां प्राधान्यानुसारं विविधा लोकाः सम्भाव्यन्ते। एष लोकस्तु जडतत्त्वप्रधानः। एतस्मिन् खल्वाधारभूताज्जडतत्त्वादेवेतराणि सर्वाणि तत्त्वान्युत्पद्यन्ते। एवमेव तत्तत्तत्त्वप्राधान्या-

---

८. तस्मिन्नेव, पृ० ११३८.

९. श्रीअरविन्दस्य, ऑन योग, प्रथमे भागे, पृ० १७.

१०. दि लाइफ डिवाइन, पृ० ८४३.

नुसारं कश्चिज्जीवनलोकः स्यात्, कश्चिन्मनोलोकः, कश्चिदधिमानसलोकः, कश्चिच्चातिमानसलोकः।[११] तत्त्वं खलु स्वरूपस्यप्रेप्सुर्भवति। अतएव तत्तत्तत्त्वमया लोका लोकान्तरविकीर्णं स्वं स्वमंशं सङ्गृहीतुं यतन्ते। यथा किल सच्चिदानन्दः परिणामानन्दस्वरूपाप्त्यर्थमात्मानं जगत्यवरोहयति, तथैव ते ते लोकाः स्वांशसङ्ग्रहणार्थं जगत्यवरोहोन्मुखा भवन्ति। अतएव जीवनतत्त्वं स्वलोकादवतीर्य, एतस्मिल्लोके प्रविश्य च जडतत्त्वान्तर्हितं स्वांशभूतं जीवनतत्त्वमुदघाटितवत्। एवमेव मनस्तत्त्वेन मनोलोकादवतीर्य जीवनतत्त्वान्तर्हितः स्वांश उद्घाटितः। इत्थमेवातः परमधिमानसातिमानसतत्त्वे स्वस्वलोकादवतीर्यैतल्लोकान्तर्हितं स्वं स्वमंशमुद्घाटयितुमपेक्ष्येते।[१२]

पुनश्चोर्ध्वस्थितानां तत्त्वानामवतारणार्थमधःस्थितानां तत्त्वानां वैशद्यमावश्यकं भवति।[१३] अस्यां पृथिव्यामेव जीवनतत्त्वं तदैवाविर्बभूव यदा जडतत्त्वं सुविकसितं सञ्जातम्। एवमेव जीवनतत्त्वे विशदीभूते एव मनस्तत्त्वमाविर्बभूव। अपरं च, अधस्तनस्य तत्त्वस्य वैशद्यमपि कारणद्वयसापेक्षम्। एषा कारणद्वयी त्ववरोहारोहव्यापारलक्षणा। सच्चिदानन्देन सहाऽवरूढा चित्शक्तिः खलु सृष्ट्युपनिबद्धानि तत्त्वान्यारोहोन्मुखानि कुर्वती विशदीकरोति। अपरं च, अर्वाचीनावरोहक्रमोपलब्धानि तत्त्वान्यप्यवरुह्यमाणं तत्त्वं विस्तारयन्ति। चित्शक्तिमात्रप्रेरित आरोहव्यापारस्तु मन्दगत्या प्रसरति। किन्त्वनया मन्दगत्यापि विकासमानानि तत्त्वानि यदा किञ्चिदुत्थाप्यन्ते तदा शनैः शनैरवरुहद्भिः तत्त्वैः परिगृह्यन्ते। एतस्मात् परिग्रहाद् विकासगतिर्द्रुततरा भवति। अथ परिगृहीतानि तत्त्वानि सत्वरं वैशद्यं प्राप्नुवन्ति। यद्यत्तत्त्वमवरुहद्भिः तत्त्वैः परिगृह्यते तत्तत्तत्त्वं तावदेकस्मिन् पक्षे स्वतः वैशद्यं व्रजति, पक्षान्तरे चोपरितनं तत्त्वं परिणमयति, अधस्तनं तत्त्वं च वैशद्योन्मुखं करोति। एतस्मात् त्रिविधवैशद्याद् तु विकासक्रमो न केवलं द्रुतगतिरेव भवत्यपित्वाकस्मिकोऽपि सञ्जायते।[१४]

प्राचीनार्वाचीनावरोहयोर्भिन्नं तृतीयं विकासव्यापारसाधकं तत्त्वं तात्कालिकं चैतन्यं बोद्धव्यम्। एतस्य चैतन्यस्य सन्निधानादारोहगतिर्द्रुततरा भवति, असन्निधानाच्च मन्थरा। अतएव जडतत्त्वाज्जीवनतत्त्वस्याविर्भावाय कोटिशोऽपि वर्षाण्यपेक्ष्यन्ते। जीवनतत्त्वस्यागमे सति तु विकासगतिर्द्रुततरा भवति। परन्त्विदानीं कस्यचिदभिनवस्य

---

११. तस्मिन्नेव, पृ० ५७३-४.

१२. तस्मिन्नेव, पृ० १०९७.

१३. तस्मिन्नेव, पृ० ३०९.

१४. तस्मिन्नेव, पृ० ८४८.

चैतन्यक्रमस्याविष्काराय प्रकृतिः तदाधारभूतं जडतत्त्वं परिणमयितुं यतते। अतएव कीटेभ्य आरभ्य मानवपर्यन्तमारोहक्रमेण तया जीवशरीरेऽसंख्याकाः प्रयोगा विहिताः। तत्रापि जीवनतत्त्वेतिहासस्य पूर्वार्धे शरीरपरिवर्तनगतिरुत्तरार्द्धापेक्षया द्रुततरा किल बभूव। तस्मिन् युगे ह्यभिनवं चैतन्याविर्भावं वोढुमसमर्थानि जीवशरीराणि स्वल्पे स्वल्पेऽपि कालान्तरे तिरस्कृतानि बभूवुः। कालक्रमेण तु यथा यथा शरीरं चैतन्यानुप्राणितं सञ्जातं तथा तथा तस्य स्थैर्यशक्तिरपि वृद्धिं गता। अथेदानीं मानवशरीरं सुविकसितं चैतन्यमुपनिबध्नत् सुदीर्घकालादेकस्मिन्नेवाकारे व्यवस्थितं विद्यते। अनेनैव शरीरेण किल बहुभिर्मनीषिभिरतिमानसीरपि चैतन्यावस्था आरूढाः। एतस्माद् ज्ञायते यन्मानवशरीरे एवागामिविकासश्चरितार्थो भवितुं शक्यते इति। परन्त्वेतत् तदैव सम्भाव्यते यदाऽतिमानसो विकासो नातिविलम्बेन सङ्घटते। अतिविलम्बे तु मानवशरीरमग्रिमविकासार्थमपर्याप्तं मन्वाना प्रकृतिरारोहवाहनान्तरमाविष्कर्तुमर्हति। अथैनमनर्थकरं विलम्बं वारयितुं मानवेनारोहव्यापारे आत्मचैतन्यं योजनीयम्। एवं सति, सुदीर्घकालापेक्षी विकासक्रमोऽप्यल्पकालसम्पाद्यो भविता। तात्कालिकचैतन्ययोगो ह्यारोहणोपजातानि तत्त्वानि परिष्कृत्य विशदीकरोति, अर्वाचीनमवरोहं च द्रुततरं करोति। अर्थतस्य चैतन्यस्य योगेनारोहगतिर्भूयोऽपि द्रुततरा कर्तुं शक्यते।[१५]

आरोहगतिस्त्वारुह्यमाणाधिष्ठान प्रकृतेरपि सापेक्षिणी भवति। श्रीअरविन्दो जडजीवनमनस्तत्त्वलक्षणं सृष्ट्यर्धमज्ञानप्रधानं मन्यते, तदूर्ध्वस्थमंशं च ज्ञानप्रधानम्। अज्ञानप्रधाने पूर्वार्धे तु प्राचीनावरोहलभ्यस्य चैतन्यस्य निगूढत्वात्, अर्वाचीनावरोहलभ्यस्य चैतन्यस्य दुष्प्राप्यत्वात्, तात्कालिकचैतन्ययोगस्य च प्रथमं तावदभावात् ततः परं चातिक्षीणत्वात्, आरोहव्यापारोऽन्धे तमसि वर्तमानो डिम्भक इव शनैः शनैः पादं न्यस्यति। मानससोपानं प्राप्य त्वेष द्रुततरो भवति नाम। परन्त्विदानीमप्येषोऽज्ञानप्रधाने एव सृष्ट्यर्धे वर्तते। मानवस्तु सम्प्रत्येतदवस्थः। अतः परं च ज्ञानप्रधानं सृष्ट्यर्धं प्रारभते। सुचिरकालाद् बहुषु महर्षिषु तत्प्रविष्टेष्वपि, प्राकृतजनस्तावादीदानीमपि तस्मात् सुदूरमवस्थितः। परन्त्वेतादृग्जनस्यैषा स्थितिरपि निष्प्रयोजना न मन्तव्या। अग्रिमसोपानस्य मानससोपानाद भृशं भिन्नत्वात्, तत्प्रवेशःखलु पूर्ववर्तिसोपानस्यसम्यग्व्यवस्थितिमपेक्षते। एतदर्थमेव मानवव्यष्टिषु सुदूरमग्रेसरन्तीष्वपि, समष्टिः सुचिरकालात् पृष्ठत एव तिष्ठति। सम्प्रति तु मानवसमाजे विकासश‍ृङ्गं आरूढे सति, अग्रिमः पादन्यासः सुतरां प्राप्तावकाशः। अत्र चेदतिमानसस्य साहाय्यं

---

१५. तस्मिन्नेव, पृ० ११०९-१०.

लभ्यते तर्हि प्रगतिः सुकरा द्रुततरा च भवेत्। श्रीअरविन्दस्तु मन्यते यदिदानीमप्यतिमानसं मानसेऽवतीर्य तदुत्थापनपरं वर्तते। अथातः परं पूर्वावस्थायाः सुव्यवस्थितत्वात्, अतिमानसस्यावतीर्णत्वात्, आरोहकानां भृशं चैतन्यमयत्वात्, विकासप्रक्रियायाश्च ज्ञानप्रधानसृष्ट्युत्तरार्धप्रविष्टत्वात्, आरोहव्यापारः खलु सौकर्येण वैशद्येन च सम्पादयितुं शक्यते।

अपरं च, अज्ञानप्रधानसृष्टयर्धगत आरोहः किल सङ्घर्षप्रायः। अत्रत्यः पदार्थः पदार्थान्तरेण सह सङ्घृष्यैव प्रसर्तुं प्रभवति। एतस्मात् खलु कैश्चिन्निर्णीयते निखिलोऽपि विकासक्रमः सङ्घर्षप्राय इति। वस्तुतस्त्वेतत् सङ्घर्षप्रायत्वमज्ञानभूयस्त्वजन्यम्। तमसि तावद् बहवो जना अहमहमिकया सपद्येवाग्रेसरन्तोऽन्योन्यं निसर्गत एव सङ्घृष्टुमर्हन्ति। प्रकाशमागत्य त्वापातत एव सङ्घर्षप्रसङ्गो निराकृतो भवति। एवमेव ज्ञानप्रधानसृष्ट्युत्तरार्धप्रवेशसमकालमेवारोहव्यापारसुलभः सङ्घर्षो न्यूनत्वगाम्यवलोक्यते। आरोहक्रमेणातिमानसं प्राप्य तु, अज्ञाने उन्मूलिते सति, अवशिष्टोऽपि सङ्घर्षप्रसङ्गोऽपसृतो भविष्यति। तदा खलु व्यष्टिरात्मसामष्ट्यं सम्यगभिज्ञाय प्रतिव्यष्टिसन्निकर्षजन्यं सङ्घर्षमनवासावसरं करिष्यति।[१६]

उत्थान-व्यवस्थान-तपोध्यानभेदादारोहप्रक्रियां श्रीअरविन्दः त्रिवृतां मन्यते। सच्चिदानन्दात्मकत्वात्, पदार्थजातस्य च स्वत्वोन्मुखीभावात् सृष्टिस्तावन्निसर्गत एव सच्चिदानन्दत्वं प्राप्तुमुन्मुखीभवति। एतदर्थमेव सा जडप्रभृतीनि तत्त्वान्युद्भावयति, अतिमानसतत्त्वमाह्वयति, विविधं चेष्टमाना च वर्तते। सृष्टेरेष निखिलोऽप्यूर्ध्वमुखो व्यापार आरोहप्रक्रियामध्यगत उत्थानाभिधोंऽशो मतः। परन्तु सामस्त्येनोत्थानशीला सत्यप्येषा न खलु प्रत्यंशं प्रत्यहं चोर्ध्वमुखी भवति। अस्याः केचिद् विभागास्तावदधोमुखा अपि दृश्यन्ते। एते विभागा न कथञ्चिदुत्थानप्रतिकूला मन्तव्याः, नैव निष्प्रयोजनाः, तेषां तूत्थानव्यापारवैशद्यप्रयोजनवत्त्वात्। अथोपरिष्टादधस्तावदवतीर्य ते न केवलं स्वीयं पदमेव द्रढयन्त्यपित्वधःस्थितान् शेषान् विभागानप्युत्थापयितुं यतन्ते। एष व्यापारस्तु नानात्वलक्षणायाः सृष्टेः सामस्त्यमूलत्वं सामस्त्योन्मुखीभावं च द्योतयति। आरोहप्रक्रियाया एषोंऽशो व्यवस्थानाभिधो मतः। परं च, सच्चिदानन्दाभिप्रेतपरिणामानन्दनिमित्तप्रवर्तितत्वादेषा सृष्टिर्न केवलमात्यन्तिकानन्दोन्मुखी, अपितु प्रक्रियानन्दाभिलाषिण्यपि मन्तव्या। अतएव सा सामस्त्योन्मुखत्वेन सह व्यष्टित्वपोषणशीलापि दृश्यते। तस्यां हि संसरणेन सह व्यष्टिनिर्माणमपि दृश्यते, व्यष्ट्युपभोगोऽपि। एतस्मात्

---

१६. तस्मिन्नेव, पृ० ११२१-२.

कारणात् सा स्थिरव्यष्टिसङ्घातस्वरूपा इव प्रतीयते । जडतत्त्वं तावद् दुर्भेद्यपरमाणु-सङ्घातरूपमिति तु विज्ञानविदोऽपि मन्यन्ते । ननु परमाणोर्दुर्भेद्यत्वं तद्व्यष्टित्वस्य सुदृढत्वं सूचयति । उद्भूतजीवनतत्त्वः प्रत्येकं प्राणी स्वां व्यष्टिं रक्षितुं व्यष्टिगतसुखानुभूतिं लब्धुं च यथाशक्ति प्रयतते । मनोऽप्यधिकृत्यैतदेवावितथं प्रतीयते । परन्तु यावत् परमाणुव्यष्टिः समष्ट्यंशमात्रात्मिका वैयष्टिकानुभूतेरभावात्, जीवनमनोव्यष्टी च प्रायशो वैयष्टिकमात्रात्मिक्यौ सामष्टिकानुभूतेर्नगण्यप्रायत्वात्, तावदतिमानसी व्यष्टि-र्युगपदेव सामष्टिक्यपि भवति वैयष्टिक्यपि, उभयविधानुभूतेः प्रत्यक्षलभ्यत्वात् । एतावता ज्ञायते यदारोहप्रक्रिया समष्टिपरापि सती व्यष्टिनिष्ठा, व्यष्टिनिष्ठापि सती सामस्त्योन्मुख, सामस्त्योन्मुखापि सती क्रमिकोन्मीलनशीलेति । व्यष्टिसमष्टिमात्रनिष्ठत्वं क्रमिकत्वं चारोह, व्यारस्य तपोध्यानाज्जायेते । यथा कश्चित् तपस्वी स्वां सम्पूर्णामपि शक्तिं सन्निरुध्य तत्सामस्त्याभिज्ञोऽपि सन् तां लक्ष्यविशेषे स्वत एव अंशतः अनुक्रमेण च नियोजयति आत्मनि वा संवृणोति, तथैव स्वां चित्शक्तिं सामस्त्येनाभिजानन्नपि परिणामानन्दोन्मुखः सच्चिदानन्दो वैयष्टिकत्वेनानुक्रमेण चोन्मीलयति, आत्मनि वा संवृणोति । आरोहव्यापारस्यैषोंऽशः तपोध्यानमिति कथ्यते । तात्त्विकसामस्तिकैकानेकवस्तुनिष्ठत्वेन सच्चिदानन्दीयमेतत्तपोध्यानमनेकविधं मतम् ।[17] अथ यावदुत्थानेन व्यष्टिः पुष्यते, व्यवस्थानेन च समष्टिः, तावत् तपोध्यानेन व्यष्टिः, समष्टिः, उभयातिक्रान्तं तत्त्वं च सममेव पुष्यन्ते । अतएव सृष्टिर्व्यष्ट्यात्मिकापि प्रतीयते, समष्ट्यात्मिकापि, उभयव्यतिरिक्तापि; स्थिरापि, गतिशीलापि ।

---

१७. तस्मिन्नेव, पृ० ६६९.

## षष्ठोऽध्यायः

# अतिमानसज्ञानी

चैत्यपुरुष-जीवात्म-विज्ञानमयपुरुषभेदेनाऽऽत्मानं श्रीअरविन्दः त्रिविधं मन्यते। जडतत्त्वान्निस्सृत्य प्राणिनोऽन्तस्तत्स्वरूपेण, तस्माच्चोत्थाय मानसपुरुषरूपेण स्वरूपं निर्मिमाण आरोहव्यापारोपजात आत्मा चैत्यपुरुष इत्यभिहितः। जीवात्मा त्वसौ यः सच्चिदानन्दस्य सांसारिकः प्रतिरूपः सन् चैत्यपुरुषेण सह सततं निवसति। किन्तु सांसारिकोऽपि सन्नेषः, चैत्यपुरुषवत् आरोहव्यापारोपजातो न भवति। एतयोर्भिन्नस्तु विज्ञानमयपुरुषः। चैत्यपुरुषः किल जडत्वनिष्ठतपोध्याननिष्पन्नः, जीवात्मा चाज्ञान-निष्ठतपोध्याननिष्पन्नः। परंतु विज्ञानमयपुरुषोऽतिमानसचैतन्यनिष्ठतपोध्याननिष्पन्नः। चैत्यपुरुषः खलु जीवात्मना सह संयुज्याज्ञानात्मा भवति। यदा त्वेतस्मिन्नज्ञानात्मनि विज्ञान मयः पुरुषोऽवतरति तदा ज्ञानात्माऽऽविर्भवति। एष ज्ञानात्मलक्षणः पुरुषोऽति-मानसज्ञानीति कथ्यते। आरोहोन्मुखी सृष्टिर्यदाऽतिमानसं चैतन्यमवतारयिष्यति तदा-ऽतिमानसज्ञान्युत्पत्स्यते इति श्रीअरविन्दो मन्यते। यथा बहुभिः प्राक्तनैर्मनीषिभि-रुच्चतरमनःप्रकाशमानमनोऽन्तर्ज्ञानाधिमानसमार्गेण सशरीरमारुह्यातिमानसस्याप्याभासस उपलब्धः, तथानुमीयते मानवीये शरीरे एवातिमानसं चैतन्यमवतारयितुं क्षममिति। एतच्चैतन्यमयः पुरुषः कीदृशो भवितेति सम्प्रति विचारार्हम्।

अतिमानसचैतन्यस्याधस्ताद् विद्यमानं ज्ञानं तथैव विच्छिन्नं भवति यथा नैशान्ध-कारानुलिप्तः प्रकाशः। एषा विच्छिन्नता खल्वनेकविधा। प्रथमं तावदत्र ज्ञाता-ज्ञान-ज्ञेयात्मको विच्छेदो दृश्यते। ज्ञाता हि ज्ञेयमात्मभिन्नं मन्यते, ज्ञानं चोभाभ्यां भिन्नम्। एषा भेददृष्टिस्तावज्जडचेतनयोर्विषयविषयिणोरात्मानात्मनोश्चान्योन्यविभेदेन प्रति-फलति। जडचेतनयोर्विभेदस्तु तदाऽऽविर्भवति यदा ज्ञाता, अज्ञानसङ्कीर्णः सन्, जडतत्त्वा-न्तर्हितं तात्त्विकं चैतन्यं नावगच्छति। अतिमानसे चैतन्ये त्वज्ञानस्यासद्भावादेषा संकीर्णता निराक्रियते, तेन च सहैतयोर्भेददृष्टिरप्यपैति। विषयविषयिणोर्विभेदस्तु ज्ञान-परोक्षत्वजन्यः। प्रत्यक्षज्ञानविषयत्वादेवात्मा विषयीति मन्यते, परोक्षज्ञानविषयत्वाच्चा-वशिष्टं जगद् विषय इति। अतिमानसचैतन्ये तु, सर्वविधज्ञानस्य प्रत्यक्षत्वात् विषय-विषयिविभेदो विलुप्यते। आत्मानात्मविभेदस्त्वहंकारजन्यो भवति। यत् खल्वहंकार-

परिविष्टं तदात्मेति मन्यते, यच्च तद्बहिर्भूतं तदनात्मेति। निरहंकारस्वरूपेऽतिमानसे चैतन्ये उदिते सति त्वेषोऽपि विभेदोविलुप्यते। ज्ञाता-ज्ञान-विभेदस्त्ववरज्ञानस्य वस्तु-विच्छिन्नत्वं संवेदनप्रत्ययजन्यत्वं चावलम्बते। एतज्ज्ञानं हि बहिः स्थितानां पदार्थानामैन्द्रियकसंवेदनेभ्यः तज्जन्यप्रत्ययेभ्यश्च निष्पद्यते। अतिमानसं ज्ञानं त्वतीन्द्रियमतिप्रत्ययं वास्तविकं तात्त्विकं च भवति। एतस्मात् कारणात् खल्वेतदेकतो ज्ञातृरूपमन्यतश्च ज्ञेयरूपं भवति। अथातिमानसज्ञानी ज्ञानात्मकः सन् ज्ञेयजातं तादात्म्यभावेन प्रत्यक्षमवगमिष्यति।[1]

पुनश्चावरासु विकासावस्थासु, चैतन्ये एव द्वैधीभावो दृश्यते। मानससोपाने एवैकत्रैन्द्रियकसंवेदनजन्यं चैतन्यं भवति, अन्यत्र च शाश्वतकालानुसङ्क्रान्तमन्तर्हितं चैतन्यम्। प्रथमकोटिकं चैतन्यं तावदारोहव्यापारजन्यं मन्यते, द्वितीयकोटिकं चावरोहव्यापारजन्यम्। मानससोपाने तु प्रथमकोटिकं चैतन्यं बलवत्तरं भवति, मनस उर्ध्वं च शनैः शनैरवरोहजन्यं चैतन्यम्। अतिमानसं प्राप्य त्वारोहजन्यं चैतन्यं तादूप्यं भजते। अथातिमानसज्ञानिन्यन्तर्बहिश्चैतन्ययोर्विभेदोऽप्याकृतो भविष्यति। असावन्तरात्मनि स्थित्वा शाश्वतानन्तनिगूढेश्वरेण सहैकात्म्यमनुभवन्नप्यात्मानं निखिलजगद्व्याप्तमित्यनुभविष्यति, जगच्चात्मस्थितमिति।

अतिमानसज्ञानिन एषा प्रतीतिस्तु क्रियात्मिका भविष्यति, न तु भावमात्रम्।[2] अवरचैतन्यभूमिकासु तु ज्ञानक्रिययोर्मध्ये विभेदो प्राप्यते। एतासु खलु यन्मनसा मनुते तत् क्रियान्वितं स्यादिति सर्वत्र न दृश्यते। प्रायशस्तु ज्ञानं निष्क्रियमेव भवति। यत्तु ज्ञानं क्रियान्वितं भवति तदप्यंशत एव। एष विभेदस्तावत् शक्ति चैतन्यान्तर्गतेतरेतरविभेदोद्भवः। आरोहक्रमेण चित्शक्तेः शक्त्यंशो जडतत्त्वरूपेणाविर्भवति चिदंशश्च चैतन्यतत्त्वरूपेण। एतयोराविर्भावस्यानुक्रमिकत्वात्, पूर्वेषु विकाससोपानेष्वेते द्वे अप्यन्योन्यपृथग्भूते प्रतीयेते। अतिमानससोपाने तु चित्शक्तेरविभक्तरूपेणाविर्भावादेषा पार्थक्यप्रतीतिर्विगलिता भवति। असौ चित्शक्तिरत्र युगपदेवात्मानं ज्ञानरूपेणापि व्यनक्ति क्रियारूपेणापि। अथ विशुद्धचित्शक्तिजन्यत्वादतिमानसज्ञानिनो ज्ञानं निसर्गत एव क्रियान्वितं भविष्यति।[3]

---

१. दि लाइफ़ डिवाइन, पृ० १२६९-७०.

२. तस्मिन्नेव, पृ० ११६४.

३. तस्मिन्नेव, पृ० १२३५.

अपरं विच्छेदकारणं तावत् सत्तायाः त्रित्वम्। एतत्तु व्यष्टिसमष्टि-सर्वातिक्रान्तलक्षणम्। अवरासु चैतन्यभूमिकासु खल्वेतानि त्रीण्यपि तत्त्वान्यन्योन्य-पृथग्भूतानीव प्रतीयन्ते। व्यष्टिस्तावदात्मानं समष्टिभिन्नेति मन्यते। एवं मन्वाना सा त्वितरव्यष्टिजातनिरपेक्षत्वेनैव प्रवर्तितुमिच्छति। एनामेव व्यष्टिप्रवृत्तिं परिलक्ष्य कैश्चिद् व्यष्टिस्वातन्त्र्यवादः प्रवर्तितः।[४] एषा व्यष्टिप्रवृत्तिस्तु भ्रमजन्या, व्यष्टिश्च मिथ्याभूतेति केचिदन्ये मन्यन्ते। श्रीअरविन्दस्त्वेतयोर्द्वयोरेव मतयोः सङ्कीर्णत्व-मुद्घाटयति। तन्मतेन व्यष्टिर्न तु सर्वनिरपेक्षा नैवासद्भूता। तस्याः सत्त्वं तावत् तदुपयोगित्वेनोपपाद्यते। जगद् हि व्यष्टिसङ्घातमिव परिलक्ष्यते, व्यष्टिमाध्यस्थ्येनैव च प्रचलति। व्यष्टिभिरेव किल जडतत्त्वाज्जीवनतत्त्वे प्रवेशः कृतः स्यात्, जीवन-तत्त्वाच्च मनस्तत्त्वे। काश्चिद् व्यष्टय एव तावदतिमानसीषु चैतन्यभूमिकास्वारूढा इत्यपि श्रूयते।[५] अथ व्यष्टिम् ऋते जगत्प्रवाहो विराममुपगन्तुं शक्नोति, जगच्च शून्यभावम्। नन्वेतादृशं तत्त्वमसद्भूतं स्यादिति न तर्कसङ्गतम्। एतेन तु, समष्टिवत् सद्भूतेन भवितव्यम्। अथ यथा समष्टिः सच्चिदानन्दोद्भवा, तथैव व्यष्टिरपि स्यात्। परं च, सच्चिदानन्दोत्पद्यमानत्वात्, तया खलूत्पत्तेः प्रागपि सच्चिदानन्दान्त-र्हितया भवितव्यम्। एवं सति, सा तावदात्यन्तिकतत्त्वभूता मन्तव्या। अथासौ न त्वसद्भूता नैव सर्वनिरपेक्षा, सच्चिदानन्दस्वरूपत्वात् समष्टिसापेक्षत्वाच्च। एवंरूपा सा न तु कस्मिंश्चित् तत्त्वान्तरे आत्यन्तिकतया विनाशयितुं शक्यते नैव सर्वनिरपेक्ष-त्वेन पूर्णत्वं प्रापयितुम्। तस्याः पूर्णत्वं तु स्वीयसच्चिदानन्दत्वान्वेषणे, समष्ट्या सहात्मसमन्वये च निहितं स्यात्। एतदर्थं खलु तयाऽऽत्मनिहितयोश्चैत्यविज्ञानपुरुषयो-रेकत्वमनुसन्धेयम्। चैत्यपुरुषस्योत्थापनेनासौ समष्ट्या सह समन्विता भविष्यति, विज्ञानपुरुषस्य चावतारेण चरमतत्त्वमात्मन्यवतारयिष्यति।[६] अवरचैतन्ये तावच्चर-मतत्त्वं व्यष्टिसमष्ट्यतिक्रान्तत्वात् तदुभयभिन्नमिव प्रतीयते। अतिमानसचैतन्ये त्वेतत् तदुभयव्यापीव ज्ञायते, एते च तदभिव्यक्तिस्वरूपिण्यौ। अनेन प्रकारेणैतानि त्रीण्यपि तत्त्वानि "अतिमानसज्ञानिनो जीवने आत्मसमन्वयस्यैकीभूतां परिपूर्तिं प्राप्स्यन्ति।"[७] निरहंकारत्वादसौ निखिलेन संसारेण सहात्मतादात्म्यमनुभविष्यति,

४. तस्मिन्नेव, पृ० ११०२.

५. तस्मिन्नेव पृ० ८२५

६. तस्मिन्नेव, पृ० ९०४-५.

७ तस्मिन्नेव, पृ० ११५७.

अतिमानसज्ञानमयत्वाच्चात्मानं सच्चिदानन्दाभिव्यक्तिभूतं ज्ञास्यति । "एतस्मिंश्चैतन्येऽधितिष्ठन्नसावतिशायिनि स्वातन्त्र्ये, पूर्णे आत्मानन्दे, समष्ट्या सहात्मतादात्म्ये, प्रत्येकजागतिकपदार्थोन्मुखस्वच्छन्दसहानुभूतिप्रवृत्तश्च निवत्स्यति ।"[८]

ननु समष्ट्या सहात्मतादात्म्यमनुभूयमानस्यातिमानसज्ञानिनो व्यक्तित्वं कीदृशं भविष्यति ? किमसौ भक्तिज्ञानादिवन्निर्वैयक्तिको भविष्यति, आहोस्विद् देशे विकीर्णः काले चानुक्षणं परिवर्त्यमानः ? एतदधिकृत्य श्रीअरविन्द एवं मन्यते— "अतिमानसचैतन्ये खलु व्यक्तित्वं निर्व्यक्तित्वं चेतरेतरविरोधिप्रत्ययौ न स्तः । एते त्वेकस्यैव सत्यस्याविच्छेद्यपक्षभूते । एतत् सत्यं च सत्तात्मकमस्ति न त्वहकारात्मकम् । एषा सत्ता निसर्गत एव निर्वैयक्तिकी समष्टयात्मिका चास्ति । तथाप्येषाऽऽत्मोपादानेनैतादृशं व्यक्तित्वं निर्मिमीते यत् प्राकृतपरिवर्तनान्तर्गतं तदात्मस्वरूपं भवति ।"[९] तन्मतेन व्यक्तित्वनिर्व्यक्तित्वे नाम मानसप्रत्ययमात्रे स्तः । मानससोपाने खलु प्रत्ययप्रत्ययिनोरितरेतरतादात्म्याभावादांशिकोऽपि प्रत्ययः समस्तां सत्तामुद्दिष्टुमर्हति । अतएवास्मिन् सोपाने काचित् सत्तैकान्ततो व्यक्तित्वलक्षणा भवितुमर्हति निर्व्यक्तित्वलक्षणा वा । अतिमानससोपाने तु सत्ता-ज्ञानयोरितरेतरतादात्म्यात्, अन्योन्यविरोधित्वेनापि प्रतीयमानाः मानसाः प्रत्ययाः तत्त्वतोऽन्योन्यपूरका इति ज्ञायन्ते । एवं सति, अतिमानसज्ञानिविषये व्यक्तित्वनिर्व्यक्तित्वविभेदोऽपार्थको भवति । तद्व्यक्तित्वं खलु "आध्यात्मिकं भविष्यति, न तु कतिपयगुणसङ्घातजन्यव्यवस्थाविशिष्टं निश्चितचरित्रविशिष्टं वा । समष्टेरतिक्रान्त सत्तयाश्च सचेतनाभिव्यक्तिस्वरूपत्वादसावेतादृशो भवितुं नार्हति" ।[१०] असौ तु "समष्टिव्यापकोऽपि सन् समष्टेः स्वतन्त्रो भविष्यति, वैयक्तिकोऽपि सन् पार्थक्यशीलेन व्यक्तित्वेन परिसीमितो न भविष्यति ।"[११]

समष्ट्या सहात्मैकत्वमनुभवन्नप्यतिमानसज्ञानी, व्यक्तित्वयुक्तत्वात्, तद्विलीनो न भविष्यति । परन्त्वसौ समष्टयर्थमात्मविलयं न करिष्यति । यथा किल प्राक्तनैः कैश्चिन्महर्षिभिः परार्थं स्वार्थपरित्यागः कृतः, परजीवनार्थमात्मजीवनविसर्जनं च, अतिमानसज्ञानी तथा न करिष्यति । व्यष्टिसमष्ट्येकत्वाभिज्ञोऽसौ यथा व्यष्ट्यर्थं

---

८. तस्मिन्नेव पृ० ११५६-७.

९. तस्मिन्नेव. पृ० ११८१

१०. तस्मिन्नेव, पृ० ११८२-३.

११. सुशीलकुमारमैत्रस्य. ऐन इन्ट्रोडक्शन् टु द फिलॉसफी ऑव श्रीअरविन्द, पृ० ५८.

समष्टिं न विसर्जयिष्यति तथा समष्ट्यर्थं व्यष्टिमपि। अज्ञानपरिपीड्यमानानां प्राणिनां कृतेऽसावुत्सर्गं तावत् करिष्यति, किंतु न कथमप्यनुकम्पापूर्वकम्। अनुकम्पा नाम तदोपजायते यदा कस्मैचित् साहाय्यं प्रददत् कश्चिज्जन आत्मानं तस्माद् भिन्नम्, ज्ञानवत्तरम्, शक्तिमत्तरम्, महत्तरं च मन्यते। अतिमानसज्ञानीत्वेवंमन्यः कदापि न भविष्यति। ज्ञानाज्ञानोभयप्रधानसमष्ट्या सहात्मैकत्वेऽनुभूयमाने सति, तस्मिन् कथञ्चिदप्यात्मभिन्नत्वावसरो नोत्पत्स्यते। प्राण्यर्थंकृतं तत्कर्मजातमात्मनिहितपरमसत्यप्रेरितं भविष्यति। तेषां पीडां निवारयितुमसौ तथैव प्रयतिष्यते यथा कण्टकविद्धपादसाहाय्यार्थं हस्तौ प्रसरतः।[१२]

नन्वतिमानसज्ञानिनो मनः कीदृशं भविष्यति, कीदृशं च शरीरम्? एतस्य प्रश्नस्य समाधानं तु पूर्ववर्तिविकासक्रमस्य परामर्शेन कर्तुं शक्यते। एतस्मात् परामर्शात्तु ज्ञायते यत् किञ्चिदभिनवं तत्त्वमाविर्भूय पूर्ववर्तितत्त्वे महत्परिणाममुत्पादयति। तथा हि जीवनतत्त्वे आविर्भूते सति जडतत्त्वं सजीवत्वेन परिणमते। एवमेव यदा जीतवनतत्त्वाभ्यन्तरतो मनस्तत्त्वमुपजायते तदा जडजीवनतत्त्वद्वयं न केवलं मनःसम्पृक्तं मनसानुविद्धं च भवति, अपितु स्वत एव भृशं परिणमते। चराचरप्राणिशरीरक्रियाविभेदपरामर्शेनत वेतस्य परिणामस्य मात्राऽऽकलयितुं शक्यते। अनयैव रीत्या, यदातिमानस चैतन्यं मानवमनस्यवतरिष्यति तदा मनोजीवनशरीराणि सुतरां परिवर्तिष्यन्ते। एतत् परिवर्तनं तूच्छेदात्मकं न भविष्यति। न हि जीवनतत्त्वे आविर्भूते सति जडतत्त्वमुच्छिन्नं भवति, मनस्तत्त्वे आविर्भूते सति जीवनतत्त्वं वा। एते तु स्वरूपवैशद्यमेव प्राप्नुतः। एवमेवातिमानसे चैतन्येऽवतीर्णे सति मनोजीवनशरीराणि स्वरूपवैशद्यं प्राप्तुमर्हन्ति। यन्मनः सम्प्रत्यज्ञानस्थं सत् स्वपथमन्वेष्टुमितस्ततो भ्रमति, विकारोदभ्रान्तं सद् विकृतिं प्राप्नोति, दुःखं चानुभवति, तदेव मनोऽतिमानसचैतन्यानुविद्धं सद् ज्ञानप्रकाशितं पन्थानं सत्वरं यथातथ्यं च द्रक्ष्यति, ऋजुना मार्गेणाग्रे सरिष्यति, निरुद्वेगं च भूत्वा सङ्कल्पयिष्यति। तस्याहंकारिकं "परमाण्वाकारत्वम्" खलु अहंकारे विगलिते सति, अनन्ताकारत्वं प्राप्स्यति। यथाऽनुलिप्ते मले प्रक्षालिते सति दर्पण सर्वाण्येव वस्तूनि यथार्थतः प्रतिफलयितुं शक्नोति, तथा जडजीवनमनस्तत्त्वानुलिप्तेषु विकारेष्वतिमानसचैतन्यसलिलेन प्रक्षालितेषु सत्सु मनः संसारयाथार्थ्यं सुतरामवगमयितुं शक्ष्यति। का वार्ता स्थूलवस्तूनाम्, तस्मिस्तु सूक्ष्मा धर्मा अपि प्रतिफलिष्यन्ति। एवमेव जीवनतत्त्वमपि वैशद्यं प्राप्स्यति। साम्प्रतिकं

१२. दि लाइफ डिवाइन, पृ० ११६१.

मानवजीवनं त्वेकतो जडतत्त्वात्मिकया जडिम्नाऽवधृतमस्ति, अन्यतश्च मानससङ्कल्पविकल्पाभ्यामितरेतरविरुद्धदिशोराकृष्टं सन्नात्मशक्तिं क्षयं नयति। पुनश्चाहंकारावच्छिन्नमनस्साहचर्याज्जीवनमपि शक्तिकृच्छ्रत्वे तिष्ठति। अपरंचेदानीमप्यदूरीकृतया पाशवप्रवृत्त्यैतद् दूष्यते। मनोद्वारावतीर्णमतिमानसचैतन्यं त्वेतेभ्यः सर्वेभ्योऽपि दोषेभ्यो मोचयित्वा जीवनतत्त्वं विशदं करिष्यति। एवं सति, तत्तत्त्वं खल्वहंकारोपजातमांशिकत्वमुत्सृज्य चित्शक्त्यभिव्यक्तिस्वरूपावबोधजन्यं स्वमंशित्वं प्राप्स्यति। चित्शक्त्या चाव्यवहितत्वेनानुप्राणितमेतत् तथैव विशुद्धिं वैशद्यं च गमिष्यति यथा स्वल्पाम्भो नदो गाङ्गेयं सलिलं प्राप्य विशुद्धिं वैशद्यं च गच्छति। जडतत्त्वेऽप्येतादृशी विशुद्धिरुत्पत्स्यते। आरोहशीलं चैतन्यं त्वेतस्मिन्नपि तत्त्वे वर्तते एव। एतेनैव चैतन्येन जडतत्त्वमारोहपथे प्रवर्त्यते। चैतन्यप्रवर्तितोऽप्यस्यारोहव्यापारो जडत्वप्राबल्येन मन्दीक्रियते। यथा यथा तु जडत्वप्राबल्यं निराक्रियते तथा तथा शरीरे चैतन्यवृद्धिरुपजायते। तथाप्येषा मानससोपानपर्यन्तं तावदांशिक्येव भवति। एतस्मिन् सोपाने हि शरीरमचेतनावचेतनाभ्यां प्रचाल्यते। अत्र तु चेतनमनः स्वल्पभावं भवति। अतएव मानसीवृत्तियोऽचेतनावचेतने सम्यगवबोद्धुं न शक्नुवन्ति। अतिमानसं चैतन्यं त्वेते उभे अपि मानससोपाने प्रकाशयितुम्, परिष्कर्तुम्, उत्थापयितुं च शक्नोति।[13] नन्वतिमानसचैतन्यचालितं शरीरं कियन्मात्रं परिणतिं गमिष्यतीत्येतत् त्ववरमनसा सम्यगवबोद्धुं न शक्यते। तथाप्येतावन्मात्रं तु सुतरामनुमातुं शक्यते यदतिमानसचैतन्यप्रच्छुरितं सत् तत् चित्शक्त्यनुप्राणितं भूत्वा स्वं दौर्बल्यं जडत्वं दुःखप्रायत्वं चोत्स्रक्ष्यति।[14]

नन्वतिमानसज्ञानिनोऽवतारस्य च मध्ये को विवेकः स्यात्? एतस्य प्रश्नस्य समाधानात् प्राक्, अवतार एव किंस्वरूप इति तावद् विचारणीयम्। श्रीअरविन्दस्त्ववतारमधिकृत्य प्रचलितानि मतानि पूर्वपक्षत्वेन प्रस्तौति। तदुल्लेखानुसारं केचिन्मन्यन्ते यत् कस्यचित् सद्गुणस्य कस्मिंश्चिज्जने विशिष्टप्रकर्ष एवावतारः, अपरे च मन्यन्ते यद् यः कोऽपि विशिष्टो जन उत्तमामध्यात्मकोटिमारुह्येश्वरेण सार्धमात्मतादात्म्यं स्थापयति सोऽवतार इति। एते उभे अपि मते सदोषे इति त्वसावुपपादयति। तथा ह्यवतार इति शब्दस्य व्युत्पत्तिलभ्योऽर्थोऽवरोहप्रक्रियां सूचयति यावदेते उभे अपि मते आरोहपरे स्त इति तस्य प्रथम आक्षेपः। अपरं च, ये त्ववतार इति शब्देनेश्वरस्य यथार्थमवरोहमवगच्छन्ति तेऽपि तं विशिष्टजागतिकबाधानिराकरणनिमित्तकमेव मन्यन्ते।

१३. तस्मिन्नेव, पृ० ११७२

१४. तस्मिन्नेव, पृ० ११७७.

ननु कादाचित्कबाधानिराकरणमप्यवतारप्रयोजनमिति स्वीकुर्वन्नपि तदेव तत्प्रयोजन-सर्वस्वमिति श्रीअरविन्दो नानुमोदते। तथा सति तु यं कमपि स्वरूपमवधार्यावतारो बाधां निराकुर्यान्नाम। असौ तु मत्स्य-कूर्म-वराह-नृसिंह-परशुराम-प्रभृतिविशिष्टप्राणिनामेव स्वरूपमवधार्याविर्भवति। एतैः स्वरूपैश्चासौ न केवलं तात्कालिकबाधामेव निराकरोत्यपितु जनानां समक्षमेनां सम्भावनामुपस्थापयति यन्मानवोऽपीश्वरत्वं प्राप्तुं क्षमः, तथा च पशुष्वपि देवत्वमवतारणीयमिति। पुनश्चासौ स्वेन सुचरितेनैतस्याः सम्भावनाया मार्गमपि निर्दिशति।[१५]

परंतु गतिरोधनिराकरणम्, आदर्शप्रस्तुतीकरणम्, मार्गप्रदर्शनं चावतारलक्षण-सर्वस्वं भवितुं नार्हन्ति। तथा सति तु प्रथितेभ्यो व्यतिरिक्ता अपि बहवो जना अवताराभिधां प्राप्तुं शक्नुयुः। एतावता चावतारत्वमतिव्याप्तिदूषितं स्यात्।

अवतारभूतः पुरुषो जगति सामान्यजन इव व्यवहरन्नपि स्वेश्वरत्वाभिज्ञो भवतीति त्ववतारस्य मौलिकं लक्षणम्। तत्त्वतस्तु ब्रह्माभिव्यक्तिस्वरूपत्वाद् यः कोऽपि प्राणी स्वमीश्वरत्वमभिज्ञातुं शक्नोति। किन्तु विकासपथं सुतरामतिक्रम्यैव तेनैतत् कर्तुं शक्यते नाम। अतिमानसचैतन्यप्रवेशानन्तरमेव ह्येषा भूमिर्लभ्या। एतद्भूमि-प्रतिष्ठितो जनस्तु श्रीअरविन्देनातिमानसज्ञानीत्यभिहितः। अवतारिको जनस्तु यत्र क्वाप्यवस्थाय स्वमीश्वरत्वमनुभवति। तदीयमीश्वरत्वं नामावरोहजन्यम्, न त्वारोह-साध्यम्। अथ यावदवतारोऽवरोहप्रक्रियाजन्यस्तावदतिमानसज्ञान्यारोहप्रक्रियाजन्यः-यावदवतार एकाकी भवति तावदतिमानसज्ञानी सामूहिकः, यावदवतारः कादाचित्को भवति तावदतिमानसज्ञान्यविरतविकासजन्यः, यावदवतारः कादाचित्कं परिणाममुत्पादयति तावदतिमानसज्ञानी सार्वभौमं सार्वकालिकं च, यावच्चावतारो विकासपथप्रदर्शको भवति तावदतिमानसज्ञानी विकासक्रमप्राप्तश्चरमपरिणामभूतः।

श्रीअरविन्दपूर्वं नीत्से इत्यभिधेन जर्मनदेशीयमनीषिणा विकासमानमानवत्व-चरमपरिणामत्वेनातिमानवस्य सम्भावनोपकल्पिता। श्रीअरविन्दस्त्वेतस्या उपकल्पनाया दौर्बल्यम्, भ्रामकत्वं चोद्घाटयति। नीत्से महोदयस्यातिमानवविषयकमन्तर्दर्शनमवितथमिति त्वसौ स्वीकरोति। तन्मतेन नीत्से "तं शब्दमुच्चचार यं शुश्राव, तत् सत्यं पुरश्चकार यद् भास्वरनिर्वैयक्तिक-निर्भ्रान्त-शाश्वतरूपेण ददर्श।" परन्तु "अतिदूरस्थ-देववीणातरङ्गरूपेणोत्पद्यातिदूरस्थादनन्तात् स्यन्दमानोऽसौ शब्दो यावत् तदन्तश्श्रवणं

---

१५ श्रीअरविन्द बर्थ सेन्टीनरी लाइब्रेरी, त्रयोदशतमे भागे, पृ० १४०.

प्राप्नोत् तावद् दोलायमानसमानान्तरविचारप्रवाहमम्मिश्रीभावात् स्त्रीयं पूतं मौलिकं ध्वनिमधिकांशतः तत्याज।"[१६] यतस्त्यं तु ख्रिष्टीयकारुण्यजुगुप्समानेन नीत्से महोदयेन तत्प्रक्रियास्वरूपः तद्भिन्नाकारोऽतिमानवः प्रकल्पितः । अतएवैषोऽतिमानवः शरीरमनोऽध्यात्मशक्तिप्राबल्येनेतरेषां सर्वेषां मानवानामुपर्यधिष्ठातृरूपेण प्रस्तावितः। सर्वोत्कृष्टत्वमारोढुमसावितरेषां दमनमपि करिष्यति महदहंकारोत्फुल्लोऽसावितरान् जनान् स्वोपभोगविषयत्वेनावगमिष्यति। अथ 'आत्मप्रकर्षप्रभुत्वयोर्निमित्तं तेन विभाजनं विरोध इतरजनेच्छाजीवनयोः प्रतिरोधश्चापेक्षिष्यन्ते। असुरभूतोऽसौ भक्षणपूर्वकमेकत्वं स्थापयिष्यति, न तु समन्वयपूर्वकम्। पदार्थजातमात्मप्रभावान्वितं कर्तुं स्वीयं परिवेशमधिष्ठातुं चासावात्मभिन्नं सर्वमपि जेष्यति पादाहतं च करिष्यति।"[१७] श्रीनीत्सेप्रकल्पितमेवंविधम् "अतिमानवत्वं खलु सर्वविधमानवीयगुणातिलङ्घिनोऽहंकारस्य दैवीकृतरूपाव्यतिरिक्तम्।"[१८] किन्त्वांगिकत्वात्, विभाजनपरत्वात्, सङ्घर्षमूलकत्वात् आसुरशक्तिप्रवर्धकत्वाच्चैतद् दैवीकरणं नाम विनाशकमिति मन्तव्यम्। ख्रिष्टीयदिव्यत्वप्रतिरुन्धता श्रीनीत्से महोदयेनासुरशक्त्यधिष्ठानभूतोऽतिमानवः प्रकल्प्य भ्रमवशाद् दिव्यपदे प्रतिष्ठापितः।

श्रीअरविन्दस्तु ख्रिष्टीयं दिव्यत्वमप्यर्धसत्यात्मकमिति मन्यते। एतस्मिन् धर्मे ह्यासुरात् सत्यार्धान्नेत्रे निमीलिते। असौ तु देवासुरलक्षणाभेदेन सत्तामुभयविधां मन्यते। यथार्थं देवत्वं नामैतयोरुभयोरेव शक्त्योः समन्वयोत्थापनाभ्यां लभ्यमिति तन्मतम्। शक्तिस्तावदर्जितव्या, न पुनरितरजनान् कारुण्यं गमयित्वा; व्यक्तित्वं तावदुत्थापनीयम्, न पुनरितरा व्यष्टीः पीडयित्वा; ज्ञानं तावदर्जितव्यम्, न पुनरहंकारपरिपोषणाय। यस्य ज्ञानं त्वज्ञानान्धकारस्थानां प्रकाशनार्थम्, यस्य शक्तिस्त्वशक्तानामनुप्राणनार्थम्, यस्य व्यक्तित्वं च समष्टिसमन्वितमसावेवातिमानव इत्यभिधानार्हः नान्यः।[१९]

१६. तस्मिन्नेव. षोडशतमे भागे, पृ० २७५-६.
१७. तस्मिन्नेव. पृ० २७८.
१८. तस्मिन्नेव, पृ० २७५.
१९. तस्मिन्नेव, पृ० २८१.

## सप्तमोऽध्यायः

# दिव्यजीवनम्

मानवः किल सुचिरकालाद् देवत्वोन्मुखः । असौ देवत्वं च प्रायशः सुदूरस्थम्, पार्थिवलोकभिन्नं च मन्वान आस्ते । अतएव स्वर्गलोकः पृथिव्या एतावद्दूरस्थः, भिन्नप्रकृतिकश्च मतो यथा त लोकं सशरीरः कश्चिज्जनो यातु न पारयतीति सुदीर्घकालाद् विश्वस्यते । पार्थिवजीवनपर्यवसानपूर्वकमेव स्वर्गलोको लभ्य इति त्वनेकधर्मप्रवर्तकानां मतम् । तथा हि मरणानन्तरं सर्वे जीवात्मनः कस्मिंश्चित् स्थले एकत्रीभूय, प्रलयकाले आगते सति, ईश्वरस्य समक्षं प्रस्तूयन्ते, ततश्च पुण्यशीलाः स्वर्गलोकं प्रेष्यन्ते शेषास्तु नरकमिति तावदिस्लामधर्मावलम्बिनो मन्यन्ते । ख्रिष्टमतमपि प्रायश एतादृशमेव । अत्रापि स्वर्गलोकवासः खलु निश्शेषपार्थिवजीवननिरसनपूर्वको मन्यते । सामान्यजनप्रचलिते हिन्दुधर्मेऽपि प्रायश एवमेव मन्यते । अत्र चेत् किञ्चिद् वैशिष्ट्यं तत् त्वेतस्यां मान्यतायां यत् पुरा केचिज्जनाः सशरीरमपि स्वर्गलोकमारोढुं समर्था बभूवुरिति । अथ यावदिस्लाम-ख्रिष्टमतानुसारं जीवने दिव्यत्वे चात्यन्तिको विरोधः, तावद् हिन्दुमते एतयोर्मध्ये सामञ्जस्यापि सम्भावनोपस्थापिता । एनामेव सम्भावनामवलम्य श्रीअरविन्दो दिव्यजीवनसिद्धान्तं प्रतिपादयति । एतन्मते, स्वर्गो न केवलं जीवनविसर्जनपूर्वकं लब्धुं योग्यः, न च सशरीरं कैश्चिद् विशिष्टैर्जनैरारोढुं शक्यः, अपितु सम्पूर्णजीवनतत्त्वे सुतरामवतारणार्हः ।

मानवः खलु विकासशीलः । स च पशुत्वादुत्थायैनां समुन्नतिमानीतः । एषा समुन्नतिस्तु भौतिकी अप्यस्ति आध्यात्मिक्यपि । सम्प्रति त्वसौ बुद्धिविलासस्य परां कोटिमारूढः । एषा तु मानसविकासस्य पराकाष्ठा । नन्वत्र केषाञ्चिन्मतं यदतः परं सम्भावितं विकासजातं सर्वथा मानसमेव भविष्यति । एवं मन्वानैस्तु विस्मर्यते यज्जगन्न कदाचिदप्येकस्यां भूमिकायां गतिशून्यं भूत्वाऽवस्थितमिति । एतस्मिंस्तु जडतत्त्वाज्जीवनतत्त्वमुद्भूतम्, जीवनतत्त्वाच्च मनस्तत्त्वम् । अथ मन एव जगत्प्रवाहस्यात्यन्तिकं चरणं स्यादिति कथं नाम श्रद्धेयम् । मनसः पारे किञ्चिन्नेति न वाच्यम् । युगे युगे ह्येतादृशो मनीषिणो बभूवुर्यैर्मनसः पारं गत्वा तद्देशीयैः सन्देशैर्मानवलोक आप्यायितुमीप्सितः । एतैर्मनीषिभिः तदनुयायिभिश्च पृथिव्यां यद्यत् संशोधनमभि-

लषितं तत्तच्चरितार्थमेवाभूदिति तावन्न वक्तव्यम् । परन्त्वेतदपि नोपपाद्यं यत् तेषां प्रयासो नितरां निष्फलः सञ्जात इति । एतैर्मनीषिभिर्हि पशुत्वान्मानवत्वाविर्भावे महदुपकृतं नाम । यत्सत्यम्, देवत्वसन्देशवाहकैरेतैर्मनीषिभिस्तावन्मानवत्वं देवत्वे न विपरिणीतम्, तथाप्येतदसन्दिग्धं यत् पशुत्वं न्यूनत्वमानीतम्, मानवत्वं दृढीकृतम्, देवत्वं चोद्भावितम् । चेत् ते पृथिव्यां देवत्वमवतारयितुं कृतकार्या न बभूवुः, तस्य तु द्विविधं कारणम् । प्रथमे कल्पे, तैः सम्यङ् नावगतं तत्त्वं वस्तुत यद् विकासक्रमागतमवरसोपानीयं उच्चतरसोपानीये तत्त्वे परिणेतुं शक्यते इति । एतस्मात् कारणात् तैर्नावबुद्धं यदेष मानवीयो लोकः कदाचिद्दीव्यीकरणार्ह इति । एतस्याः सम्भावनाया अभावे तैः खल्वेतस्मिन्नेव व्यापारे सन्तोषो मतः यद् याः काश्चिद् व्यष्टयोऽवबोधयितुं शक्या ता एव मृत्योः पश्चाद् देवत्वं प्रापणीयाः स्युः । द्वितीये कल्पे, एष जागतिकविकाससिद्धान्तः प्रतीयते यत् सोपानविशेषस्थितं तत्त्वं तावदग्रिमसोपाने अनुत्थापनीयं भवति यावत् तत् प्रस्तुतसोपाने सम्यङ् न व्यवतिष्ठते । यथा सोपानारोहणव्यापारे खल्वेकः पादस्तावन्नाग्रिम सोपाने उत्थापयितुं शक्यते यावदपरः पादः पूर्वसोपाने सम्यङ्न्यस्तो न भवेत्, तथैव जागतिकविकासप्रक्रियायामपि देवत्वं खलु तावदारोढुं न शक्यते यावन्मनः स्त्रीये सोपाने सम्यग्व्यस्थितं न भवेत् । सम्प्रति विज्ञानयुगे मनस्तावत् प्रभूतमुत्कर्षं गतम् । विश्लेषणपूर्वकं पदार्थावगतिरेव तत्कार्यम् । एतस्मिन् कार्ये त्विदानीं तत् सम्यग्व्यवस्थितम् । अथाधुनैतदग्रिमविकाससोपाने चरणन्यासार्हं संवृत्तमिति श्रीअरविन्दो मन्यते ।

अथ मनस ऊर्ध्वं सङ्क्रमणाय पूर्वतरसङ्घटितारोहप्रक्रियानुसारमारोहलक्षणं व्यापारद्वयमपेक्ष्यते । आरोहलक्षणो व्यापारस्तु मनोनिहितसच्चिदानन्दतत्त्वस्य स्वत्वप्राप्त्यभीप्साप्रचोदितो भवति । अवरोहलक्षणो व्यापारश्च सच्चिदानन्दोन्मुखे मनस्यतिमानसचैतन्यावतारभूतः । एतयोरुभयोर्व्यापारयोः संयोगेनातिमानसः सोपानः प्रापणीयः ।

सम्भावितेनातिमानसविकासेन त्वान्तरवाह्यभेदेन द्विविधेन भवितव्यम् । एतयोर्मध्ये आन्तरिको विकासस्तु प्राथमिकः एष तावत् सुचिरकालात् सम्पन्नप्रायोऽपि प्रतीयते । अनेकसहस्रवर्षेभ्यः किल मनीषिणः स्वर्गोन्मुखाः, अध्यात्मनि दिव्यत्वदर्शिनश्च संवृत्ताः । अनेन प्रकारेण दिव्यीकरणस्यान्तरिको व्यापारः सुतरां पूर्वनिष्पन्न एव । इदानीं त्वसावेव व्यापारो बहिर्जगत्यपि सम्पादनीयः ।[1]

१. श्री अरविन्दस्य, दि लाइफ डिवाइन, पृ० १९२.

बाह्य जगतोऽपिदिव्यीकरण साधनं चैतन्यमिति श्रीअरविन्दो मन्यते । चित्शक्तौ तु चैतन्य-शक्त्योरन्योन्याश्रितत्वात्, लोकेऽपि यादृशं चैतन्यं भवति तादृशी शक्तिरपि । मनःसोपाने खलु चैतन्यं विभाजनशीलं भवति । एतस्मात् कारणान्निखिलमपि जगदति-सूक्ष्मावयवसङ्घातभूतमिति मानवः सम्प्रति मन्यते । विभाजनपूर्वकमेवासौ प्रत्येकं पदार्थं ज्ञातुं चेष्टते । असावात्मानमितराभ्यो व्यष्टिभ्यः पृथक्करोति, संसाराच्च विविनक्ति । एतस्मादेव पार्थक्यभावादसावहंकारपरवशो भवति । अहंकारवशीभावाच्च तस्मिन् स्वार्थवृत्तिप्राधान्यं भवति । अथासौ युयुत्सुर्भूत्वाऽऽत्मानं महति कष्टे निपातयति ।

अनेन प्रकारेण मानसचैतन्योपजन्यमज्ञानम्, अन्योन्यभेदवृत्तित्वम्, अहंकार-वशित्वम्, स्वार्थपरत्वम्, संघर्षोन्मुखत्वं च मानवजीवनस्य साम्प्रतिकानि कष्टमूलानि । एतेषां सद्भावान्मानवजीवनमिदानीमासुरीकृतं विद्यते । पुनश्च मानवजीवनस्येतरं कष्टमूलं जीवनतत्त्वमिति मन्तव्यम् । यान्त्रिकत्वलक्षणाज्जडतत्त्वादचिरोत्पद्यमानत्वा-देतत् तत्त्वं खलु यान्त्रिकचैतन्यमयमस्ति । एतद् यान्त्रिकचैतन्यमयत्वं सहज-मूलप्रवृत्त्या-त्मकक्रिययो रूपेणाभिव्यज्यते । एताभ्यां क्रियाभ्यामवनद्धत्वान्मानवः केनचिदुदात्तेन मार्गेण जिगमिषुरपि सन् प्रायशोऽसफली भवति । तज्जीवनान्तर्हितं यान्त्रिकत्वं तावद-चेतनरूपेण तच्चैतन्यमभिदूषयति । तन्निहिताऽर्धयान्त्रिकी मूलप्रवृत्तिश्चावचेतनं रूपम-वधार्य तदीयमुच्चतरं चैतन्यं परिसीव्यति । अतएव सुचिरकालादुदात्तचैतन्यैर्महर्षिभि-र्मुहुर्मुहुरुपदिश्यमानोऽपि मानवोऽवचेतनाचेतनचक्रान्निर्गन्तुं न शशाक । विश्वामित्र-वामदेव-वसिष्ठ-याज्ञवल्क्य - कृष्ण-जरथुस्त्र - बुद्ध-महावीर-कन्फ्यूसियस - खिष्ट-मोहम्मद-नानक-कबीर-रामकृष्ण-सदृशैर्मनीषिभिर्निर्जिगमयिषितोऽपि मानवो जीवनतत्त्वदूषणकर्दमे इदानीमपि विचेष्टमानो दृश्यते । असौ तावदेतस्माद् दूषणान्निर्गन्तुमिच्छतीत्यत्र नास्ति कश्चित् सन्देहः । एतदर्थमेव तेन स्वर्गः प्रकल्पितः । किन्तु जीवनविसर्जनपूर्वकत्वात् स्वर्गमार्गस्तावदप्रशस्तः प्रतीयते । प्रशस्त उपायस्तु स यो जीवनतत्त्वविकासपूर्वकः स्यात् । जगतश्चैतन्यमूलकत्वात्, जागतिकविकाससोपानानां च चैतन्यव्यवस्थितत्वात्, तदनुरूप-चैतन्याविर्भावेनैव जीवनतत्त्वं संशोध्यम् ।

अथ जीवनमनस्तत्त्वयोः संशोधनार्थमतिमानसं चैतन्यमवतारणीयम् । एतदर्थं तावत् कैश्चिज्जनैर्मनोऽतिक्रमणपूर्वकमतिमानसीष्ववस्थासु प्रवेष्टव्यम् । कश्चिदप्यग्रिमो विकासो हि व्यष्टिमुखेनैव प्रारभते । समष्टिस्त्वत्र व्यष्ट्यनुयायिनी भवति । यत्सत्यं "व्यष्टिर्नाम विकासकुञ्चिका । एषा ह्यात्मानमन्विष्यति सत्तां चावबोधयते । जनसमू-

हस्य गतिस्तु प्रायेणावचेतनात्मिका भवति ।''[२] एता व्यष्टयः खल्वात्मोन्मुखीभूयानुक्रमेण मनः, उच्चतरमनः, प्रकाशमानमनः, अन्तर्ज्ञानम्, अधिमानसं चातिक्रम्यातिमानसं प्राप्स्यन्ति । अतिमानसप्रकाशेन तु मनःप्रभृतीनामज्ञानमामूलमपध्वस्तं भविष्यति, तेन सह तेषां कल्मषजातं च । एतेन व्यापारेण त्वानुक्रमिकेण भवितव्यम् । सान्निध्यात्, सूक्ष्मत्वाच्च प्रथमं तावदतिमातसप्रकाशेनाधिमानसं प्रकाशितं भविष्यति । तदनन्तरमेष प्रकाशोऽनुक्रमेणान्तर्ज्ञानम्, प्रकाशमानमनः, उच्चतरमनश्च पावयिष्यति । अथैष जीवनतत्त्वम् जडतत्त्वं च प्रवेक्ष्यति । अतिमानस चैतन्यं तु दिव्यम् । अथ तदीयं दिव्यत्वं किल आजडतत्त्वं पदार्थजातं दिव्यीकरिष्यति ।

अनया रीत्या कासुचिद् व्यष्टिषु दिव्यीकृतासु सत्सु, ताभिरेव समष्टिरपि दिव्यत्वोन्मुखी कारयिष्यते । द्वयोरपि सच्चिदानन्दोपजायमानत्वात्, व्यष्टिसमष्टी खल्वन्योन्याश्रिते, अन्योन्याविष्कृते च भवतः । चेदारोहारम्भे समष्टिर्व्यष्टिमुपजनयति, तर्हि तदनन्तरं व्यष्टिः समष्टित्वमुपजिगमिषति । अतिमानसीये चैतन्येऽवतीर्णे सति तु, अज्ञाननिरासात्, व्यष्टिः सामष्ट्योन्मुखी भविष्यति । सामष्ट्योन्मुखोऽतिमानसज्ञानी खलु व्यष्टिसमष्टिविभेदमपाकरिष्यति । असौ हि व्यष्टौ समष्टिं द्रक्ष्यति, समष्टौ च व्यष्टिम् । अथातिमानसचैतन्योद्भासिता व्यष्टिः स्वं परिवेशमपि ताद्रूप्येणोद्भासयिष्यते । अनेन प्रकारेण बह्वीषु व्यष्टिषु स्व-स्व-परिवेशोद्भासनपरासु सत्सु निखिलमपि जगत् तच्चैतन्योद्भासितं भविष्यति । अतिमानसचैतन्यस्य तु सदानन्दानन्यत्वात्, तस्मिन् सामष्ट्येनावतीर्णे सति जगदपि सदानन्दात्मकं भविष्यति ।

ननु दिव्यीकृतं जीवनतत्त्वं किंविधं भविष्यतीति त्विदानीं विचारास्पदम् । प्रथमं तावदेतावता नानुमेयमेतद्विधं तत्त्वं स्वत्वविहीनं भविष्यतीति । तत्त्वान्तरवदेतस्यापि तत्त्वस्य शाश्वतिकत्वात्, दिव्यीकरणानन्तरमप्येतन्नाम तथैव स्थास्यति यथेदानीम् । तद्गतः परिणामस्तु तस्य प्रकृतौ व्यापारेषु चौदात्त्यमाविर्भावयिष्यति । एतत्तत्त्वं यावदिदानीं सहजक्रियया, मूलप्रवृत्त्या च प्रेर्यमाणं प्रवर्तते, तावत् तदानीमतिमानसचैतन्यालोके प्रवर्तिष्यते । अतिमानसं चैतन्यं प्राप्य सहजाः क्रियाः, मूलप्रवृत्तयश्च ज्ञानात्मिका भविष्यन्ति । फलतः अज्ञानलक्षणो व्यापारजातो विसृष्टो भविष्यति । काम-क्रोध-मद-लोभ-मोह-जुगुप्सा-युयुत्सा-भय-रागद्वेषप्रभृतिवृत्तय उन्मूलिता भविष्यन्ति । एतासां प्रवृत्तीनामुन्मूलनात्, जीवनविकासक्रमो निर्द्वन्द्वात्मको भविष्यति ।

२. तस्मिन्नेव, पृ० १२४८.

जीवनतत्त्वे दिव्यीकृते सति, शरीरतत्त्वमपि तदनुरूपं परिणमिष्यते। साम्प्रतिकं मानवशरीरं त्वंशतो जीवनतत्त्वनिहितेन चैतन्येन चाल्यते, अंशतो मनस्तत्त्वनिहितेन, अंशतश्च स्वगतेन। एतच्चैतन्यत्रयं त्वनुक्रमेणावचेतनचेतनाचेतनाभिधम्। अतिमानसचैतन्ययोगात् त्वेतच्चैतन्यत्रयमपि सन्मयम्, आनन्दमयं च भविष्यति। यथा खलु चित्तवृत्तीनामधस्तादचेतनावचेतनातिचेतनात्मकमतिबृहद्चैतन्यक्षेत्रमधिगम्यते, तथैव सम्मिलितरूपेण स्थूलशरीराभिधानां दैहिकव्यापाराणामधस्तात् सूक्ष्मशरीराभिधं देहसंस्थानं प्राप्यते। एतत् शरीरं तु स्थूलशरीरापेक्षया व्यापकतरम्, स्थिरम्, सुखदुःखद्वन्द्वातीतं च भवति। अतिमानसचैतन्येन चेतनावचेतनाचेतनाभिधे चैतन्यत्रये प्रकाशिते, विशदीकृते, उन्नीयमाने च सति सूक्ष्मशरीरसुलभा धर्माः स्थूलशरीरेऽप्याविर्भविष्यन्ति। परिणामतः, एतदपि तद्धर्मान्वितं भविष्यति।[3]

ननु दिव्यीकृतमनोजीवनशरीराणां जनानां समाजः कीदृशो भविष्यति? व्यष्टेः शाश्वतिकत्वादेतत् तूपपन्नप्रायमेव यत् तस्यामप्यवस्थायां तासां सद्भावो भविष्यति। अथासौ समाज एतासां व्यष्टीनां सङ्घटनादुत्पत्स्यते नाम। परं तु स्वभावस्योन्नीयमानत्वात्, व्यष्टीनामन्योन्यगतः सम्बन्धः स्वरूपोत्थापनं प्राप्स्यति। परिणामतः, अनेकत्वविशिष्टास्वपि तास्वतिमानसचैतन्योद्भावितमेकत्वमनुभवपदमागमिष्यति। अथान्योन्यविभेदजन्यानि निखिलानि दूषणान्येतस्मात् समाजान्निर्मूलितानि भविष्यन्ति। अत्र राग-द्वेष-संघर्ष-जुगुप्सा-पैशुन्य-हिंसाप्रभृतयो वृत्तयोऽनवाप्तावकाशा भविष्यन्ति। एतद्विधः समाजः तथैव सामञ्जस्यनिष्ठो भविष्यति यथा रागभेदेऽपि किञ्चित् सङ्गीतकं समन्वितं भवति।[4] अपरं च, व्यष्टेः समाजस्य च सर्वासां क्रियाणां निरसिताज्ञानपूर्वकत्वेन ज्ञाननिष्पादितत्वात्, अज्ञानजन्यमपि निखिलं दूषणमपसारयिष्यते। अथ भ्रान्तिव्यामोहासाफल्यादीन्यपि निरस्तानि भविष्यन्ति। अन्ततः सर्वव्यष्टीनां दुःखदैन्याशक्तिनिराशाद्यतीतत्वात् निखिलोऽपि समाज आनन्दाप्यायितो भविष्यति।

नन्वेतादृशः परिणामः सपदि भविता, अनुक्रमेण वा? अतिमानसचैतन्यसामस्त्यविमर्शात्तु प्रथमो विकल्पो बलवत्तरः प्रतीयते। किं तु यथा सच्चिदानन्द एकोऽपि सन् नानेकत्वविरुद्धः, सद्भूतोऽपि सन् न परिणामविरुद्धः, एवमेव सामस्त्यलक्षणमप्यतिमानसचैतन्यं नानुक्रमविरुद्धं स्यात्। यत्सत्यम्, अनुक्रमेणैव तदधिमानसप्रभृतिष्वध्यात्मतत्त्वेष्ववतरणशीलमिति तदभिज्ञानां मतम्। एवं सति, सानुक्रममेव तेन

३. तस्मिन्नेव, पृ० ३११.
४. तस्मिन्नेव, पृ० १२२७-८.

मनोजीवनजडतत्त्वान्यनुव्याप्तानि स्युः। अनेन प्रकारेण, मनस्तत्त्वे दिव्यीकृतेऽपि जीवनतत्त्वमदिव्यं स्यात्, जीवनतत्त्वे दिव्यीकृते च शरीरतत्त्वमदिव्यीकृतम्। दिव्यत्वमात्रायामपि न्यूनाधिक्यं भवितुमर्हति। सान्निध्यासान्निध्यभेदात्, एकस्मिन्नेव काले जीवनतत्त्वं जडतत्त्वाद् दिव्यतरं भवितुमर्हति, मनस्तत्त्वं च जीवनतत्त्वात्। अथ दिव्यीकरण इति पदान्नानुमितं स्यान्निखिलमपि जगत् सर्वभावेन सपद्येव भिन्नस्वरूपकं भविष्यतीति। वस्तुतस्त्वेतस्यापि लोकस्य सच्चिदानन्दाभिप्रेतत्वात्, एतदुन्मूलनं कथमपि तदभिमतं न स्यात्। अतएवैतस्मिन् दिव्यीकृतेऽपि सति वस्तु–व्यापारयोर्नानात्वं सुतरां सम्भाव्यते। वैशिष्ट्यं त्वेतन्मात्रं भविष्यति यज्जगति दिव्यीकृते सति वस्तून्यज्ञाननिमग्नानि न भविष्यन्ति, व्यापाराश्चाज्ञानप्रेरिताः। यथा जगति दिवापि तान्येव वस्तूनि ताश्चैव क्रिया भवन्ति यास्तु रात्रौ, किं तु सौरं प्रकाशं प्राप्य वस्तूनि भिन्नाकाराणि भवन्ति, क्रियाश्च भिन्नविधाः, तथैव दिव्यीकृते जगत्यपि तान्येव वस्तूनि भविष्यन्ति ताश्चैव क्रियाः, किं त्वतिमानसं चैतन्यं प्राप्य तेषां प्रकृतौ तासां विधौ च महद्विपरिणाम उत्पत्स्यते।

ननु श्रीअरविन्दप्रतिपादितो दिव्यजीवनसिद्धान्तो भारतीयचिन्तनपरम्परायामद्भुतः सन्निवेश इति प्रमाणीकर्तुं शक्यते। वेदेषु दिव्यजीवनविषयकाः केचन् सङ्केताः प्राप्यन्ते नाम, किन्त्वेतस्य तथ्यस्यावबोधोऽपि सर्वप्रथमं श्रीअरविन्देनैव कारितः। पूर्ववर्तिनो भाष्यकारास्त्वेनादृशान् सङ्केतान् लोकान्तरमुखेनैव व्याख्यातवन्तः। एतस्य दीर्घकालपर्यन्तस्य भ्रमस्य कारणं त्वेतेषां सङ्केतानामल्पत्वम्, विकीर्णत्वं चेति मन्तव्यम्। श्रीअरविन्देन तु न केवलमेते विकीर्णा ज्ञानलवाः सङ्कलिताः, अपितु सोपपत्तिसिद्धान्तिताः, प्राशस्त्यं चोपनीताः। अपरं च, सम्प्रति वेदर्षिप्रतिपादितो देवत्वावतारमार्गो विस्मृतप्रायः सञ्जातः। श्रीअरविन्देन त्वेष न केवलं सुतरां स्मृतिपथमानीतः, अपितु प्रशस्तः सुगमश्च कृतः।

वेदाभिमतस्य दिव्यीकरणमार्गस्याप्राशस्त्यात्, विस्मृतप्रायत्वाच्च परवर्तिनो वेदान्ताचार्याः तस्माद् विमुखीभूय तद्विरोधिनः संवृत्ताः। तथा हि, जीवनतत्त्वगतानि दूषणानि ब्रह्मतत्त्वं न प्रदुष्येयुरित्यनर्थमनवकाशं प्रापयितुं श्रीशङ्कराचार्यः तद्दिव्यीकरणस्थाने जीवनतत्त्वमेव मायाकोट्यामवक्षिपति। तन्मनसि कदापि नोत्पन्नं यद् ब्रह्मयोगेन जीवनतत्त्वमेव ब्रह्मत्वं प्राप्तुमर्हतीति।[५] श्रीरामानुजाचार्यस्तु चिदचित्तत्त्वे आत्मशरीरत्वेनोपकल्प्य, अथैतयोरन्योन्यसहवासावसरमाविष्कृत्यापि, अन्योन्य-

५. श्रीशङ्कराचार्यस्य, ब्रह्मसूत्रभाष्ये, २।१।१६.

प्रभावकत्वप्रसङ्गाद् विमुखीभूतः। तन्मतेन "शरीरगतास्तु दोषा नात्मनि प्रसज्यन्ते, आत्मगताश्च गुणा न शरीरे।"[६] श्रीअरविन्दस्तु ब्रह्मणा सह जडजीवनतत्त्वयोरेकत्वमुपगाद्य तं विधिं प्रदर्शयति येनातिमानसं चैतन्यं खल्ववराणि तत्त्वजातानि स्वेन चैतन्यप्रकाशेन प्रकाश्योन्नेतुमर्हति।

चैतन्य-वल्लभ-शैवेषु जगद्दिव्यत्वप्रत्ययस्य केचिदाभासाः प्राप्यन्ते नाम। तथा हि, जगत् परमेश्वरस्य लीलाभूमिर्यत्रासौ जीवैः सह रममाण आस्ते, यत्र च जीवाः तेन सह रममाणाः शनैः शनैर्दिव्यत्वोन्मुखा इति श्रीचैतन्यो मन्यते। एवमेव "यमुनापुलिननिकुञ्जगोवर्धनादि"स्थलीवैकुण्ठादप्यधिकतरानन्दमयीः "विचित्रलीलाकारणादिति" श्रीवल्लभाचार्यः।[७] असौ तु "भक्तानां तु देहेन्द्रियादिकमपि मायातत्कार्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्यतोऽपि तत् तथे"ति प्रतिपादयन् देहपर्यन्तमपि दिव्यीकरणव्यापारमनुभवति।[८] अनेनैव प्रकारेण, चितितत्त्वे उन्मग्ने सति विश्वं स्वरूपाभेदेन प्रतीयते इति प्रत्यभिज्ञाशास्त्रे मन्यते।[९] एनामेव प्रतीतिमवलम्ब्य कश्मीरशैवाः "जगदानन्दम्" परिकल्पयन्ति। एतस्माज्ज्ञायते यत् श्रीअरविन्दपूर्वमपि भारतीयचिन्तनपरम्परायां जगतो दिव्यत्वमधिकृत्य यावदेकस्मिन् पक्षे महान् विरोध आविर्भूतः तावदन्यस्मिन् पक्षे यदा कदा केचिद् विचारलवाः प्रकटीकृताः। किं त्वेते सर्वे एव प्रायशो भक्तिभावोद्रेकभूताः, विशिष्ट- व्यष्टिचैतन्यमात्रनिर्भराश्च। अतएवैतस्मिन् दिव्यीकरणे चेत् किञ्चित् स्वरूपोत्थापनमपेक्ष्यते तत्तु विशिष्टव्यष्टिचैतन्यमात्रे, न तु सामान्यजगति। यदा काचिद् व्यष्टिर्भक्तिभावोद्रेकोन्नीयमाने चैतन्यसोपाने आरोहति तदा तस्यै वस्तुतः पूर्ववदेव स्थितं जगत् परमेश्वरलीलाभूमिरिव प्रतीयते, यावदन्येषामभक्तानां कृते तु तत् पूर्वस्वभावस्थमेव भवति। अथ यावदेतेषु मतेषु दिव्यीकरणं वैयक्तिकम्, व्यष्टिभावमात्रनिर्भरं च भवति, तावत् श्रीअरविन्दमतेनैतद् व्यष्टिसमष्ट्युभयव्यापकम् वास्तविकं च।

६. श्रीरामानुजाचार्यस्य, श्रीभाष्ये, २।१।६.

७. अणुभाष्ये, ४।४।१.

८. तस्मिन्नेव, ३.४।३८.

९. प्रत्यभिज्ञाहृदये, सूत्र १५.

## अष्टमोऽध्यायः

# दुःखपापादिकारणनिरूपणम्

जगतो दिव्यीकरणे सर्वाधिकमन्तरायकारकं तथ्यमेतस्यामङ्गलासुखादिमयत्व-मित्युपपादयितुं शक्यते। अत्र पदे पदे दुःखमनुभूयते, पापं प्रत्यक्षीक्रियते, अशिवं चाशङ्क्यते। मानवेतिहासस्यारम्भकालादेवैतत्सर्वं विद्यमानं सन्नद्यापि प्रभूतमात्रायां दृग्गोचरी क्रियते। किं बहुना, मानवेषु सततमपाकरणव्यापारसंलग्नेष्वप्येतदनुदिनं प्रवर्धमानमिव लक्ष्यते। पशुजीवने एतस्य सापेक्षिकं वैरल्यं मानवजीवने च बाहुल्यं विमृश्य कोऽपि विचारशीलः प्राणी दिव्यीकरणयोजनाया मिथ्यात्वं प्रतिपत्तुमर्हति। अपरं च, दिव्यीकरणव्यापारभिन्नेष्वपि स्थलेषु सच्चिदानन्दपरायणा श्रीअरविन्ददर्शन-सरिद् दुःखपापाशिवादिशिलोच्चयप्रतिहता सती निरुद्धवेगेव प्रतीयते। ननु सच्चिदा-नन्दो जगन्मूलं चेत्, संसारेण दुःखादिशून्येन भवितव्यमिति प्रतितर्कोऽनायासमुपजृम्भते। श्रीअरविन्दस्त्वेनां समस्यां कथं समाधत्ते इति सम्प्रति विचारार्हम्।

प्रथमं तावद् दुःखबहुलं प्रतीयमानमपि जगत् परमार्थतो न तथाविधमिति श्रीअरविन्दस्याधारभूतः सङ्कल्पः। जगदेतद् दुःखबहुलं चेत्, कोऽप्यत्रोच्छ्वसितुं नेच्छेदिति तस्य तर्कः। जनास्तु दुःखिता अपि, पापान्विता अपि, अशिवमाशङ्कमाना अपि जिजीविषन्ति। केचिन्नगण्यसंख्याका विक्षिप्तमनस एव प्राणधारणान्मृत्युं प्रियतरं मन्यन्ते। आकीटमानवव्यापृतां जिजिवीषां परामृश्य जगद्दुःखबहुलमिति खलु नोररी-कर्तुं शक्यते।

ननु भवेन्नाम दुःखं सुखादल्पतरम्, तथाप्येतद् बलवद् उद्वेगकरमित्यत्र नास्ति संशयावकाशः। तथा ह्यनुत्पन्नदुःखो जनो न तथा सुखायते यथोत्पन्नदुःखो जनो दुःखायते। अथैतावतानुमातुं शक्यते जगति दुःखं बलवत्तरमिति। श्रीअरविन्दस्त्वे-तस्मिन् तथ्येऽन्यविधमेव रहस्यमनुसन्धत्ते। तन्मतेन, दुःखस्योद्वेजकत्वं खलु तदसा-मान्यत्वं निर्दिशति। सामान्यत्वेनानुस्यूतत्वात् सुखं तावदनुभूयमानमपि निर्विशेषं प्रतीयते यावदसामान्यत्वाद् दुःखं नामोद्वेजकं भवति।[1]

---

१. श्रीअरविन्दस्य, दि लाइफ़ डिवाइन, पृ० ११०.

ननु भवेन्नाम दुःखमसामान्यं कादाचित्कं च, परं मौलिकः प्रश्नस्तु पूर्ववदेव बद्धमूलोऽवस्थितः । कस्माद्धेतोः सच्चिदानन्दमात्रकारणं जगत् तावन्मात्रमपि सन्मयं न यथा पापं नोत्पद्येत, तावन्मात्रमपि चिन्मयं न यथाऽशिवं परिवर्जयेत्, तावन्मात्रं चाप्यानन्दमयं न यथा दुःखं नानुभवेत् ? सच्चिदानन्दमात्रपरिणामभूतमपि चेदेतदेतद्विधम्, तर्हि दुःखादीनामल्पतरत्वसाधनमात्रेणैषा समस्या समाधानपथं नावतारयितुं शक्यते ।[2]

केचित् पुनः कर्मसिद्धान्तमवलम्ब्यैनां समस्यां समाधातुं प्रयतन्ते । सच्चिदानन्दकल्पेश्वराज्जायमानमपि जगद् वस्तुतो जीवकृतकर्मफलोपादानम् । कर्मफलस्य च सुखदुःखाद्यात्मकत्वात्, जगदपि तादृशं भवतीति तेषां मतिः । श्रीअरविन्दस्त्वेतदपि समाधानं पर्याप्तं न मन्यते । कर्मफलं नाम सुखदुःखलक्षणमित्यत्र नास्ति काचिद् विप्रतिपत्तिः । प्रश्नस्त्वेष किमर्थं खलु जीवा दुःखोत्पादकं कर्म कुर्वन्तीति । पूर्वजन्मकृतं कर्म कारणत्वेनोपयुञ्जीत चेत्, किमर्थं तादृग्रूपेणैव तत् कृतमिति प्रश्नः समुल्लसति । एवं कार्यकारणपरम्परामवलम्ब्य कियन्मात्रमपि किं न प्रतिनिवर्तेत, आद्यकर्मणो दुःखाद्युत्पादकत्वं स्वगतसमाधानार्हं कथमपि न भविष्यति । पुनश्चैतस्यां कार्यकारणपरम्परायां प्रेरकत्वेनेश्वरेच्छायाश्चेत् सन्निवेशः कुर्यात्, तयैवाद्यं कर्म तथाविधं कारितमिति, तत्राप्याद्यः प्रश्न उत्पत्स्यते किमर्थं तथाविधेनेश्वरेण तथाविधं दुःखाद्युत्पादकं कर्म कारितमिति । अपरं च, तथाविधं कर्म सकृत् कारयित्वा चेदसौ तस्मात् प्रतिनिवृत्तोऽभविष्यत्, तदपि क्षम्यं स्यात् । तेन तु न केवलं प्राथमिकी प्रेरणैव प्रदत्ता, परं च कर्मसिद्धान्त एवंविधो विहितो यथा शाश्वतिको दुःखादिप्रवाह उत्पादितः । किमीश्वरे एव किञ्चद् दुःखादिमयत्वं विद्यते येनासौ जीवं तदुन्मुखं करोति ? किन्त्वेतादृश ईश्वरः किल स्वत्वच्युतो भविष्यति ।[3]

एतदेव काठिन्यमाकलय्य खलु केचित् तावद् दिव्यादिव्यभेदेन पारमार्थिकं कर्तारं द्विविधं मन्यन्ते । तेषां मतेन, दिव्यः कर्ता मङ्गलकारकः सुखप्रदश्च, अदिव्यश्च कर्ताऽशिवो दुःखोत्पादकश्च । एषोऽदिव्यः कर्ता तेषु तेषु मतेषु अह्रिमन्-असुर-सैटन-प्रभृतिभिर्नामभिः प्रथितः । एतत् समाधानं तु सामान्यदृष्ट्या सङ्गतं प्रतीयमानमपि सत् विशिष्टतर्कदिशा, अनुभूत्या च परीक्षितं सत् स्वीयामसङ्गतिमुन्मीलयति । एतस्मिन् समाधाने स्वीकृते सति ह्यात्यन्तिकं सत्ताद्वित्वं प्रसज्येत । तर्कः, अन्तश्चैतन्यम्, अध्यात्मानुभूतिश्च समवेत्य निर्दिशन्ति यज्जगदद्वैतसत्तात्मकमिति ।[4]

२. तस्मिन्नेव, पृ० १११.

३. तस्मिन्नेव, पृ० ११२.

४. तस्मिन्नेव पृ० ४७२.

एवं सति, मूलप्रश्नः पुनरेवोत्तिष्ठति किमर्थं कथं चाद्वैतलक्षणः सच्चिदानन्दो दुःखादिमयं जगत् सृष्टवानिति। दुःखादिकं खल्वभावलक्षणमिति तु श्रीअरविन्दः। सिसृक्षुः सच्चिदानन्दो यदाऽऽत्मतपसाऽऽत्मानमात्मनि विलीय सदसति तिरोधत्ते, चिदचिति, आनन्दं च निरानन्दत्वे, तदा तत्तिरोधानफलस्वरूपम् असदचिन्निरानन्दत्वं चोपजायन्ते। एतानि तत्त्वानि तु न कथमपि सच्चिदानन्दबहिर्भूतानि, तस्याद्वैतत्वात्; नैव तदात्मभूतानि, अतत्स्वभावकत्वात्। यथा खल्वन्धकारः पृथक्त्वेनानुभूयमानोऽपि परमार्थतः प्रकाशाभावमात्रमेव, तथैवासत्प्रभृतीनि तत्त्वानि पृथक्तत्त्वलक्षणानि प्रतीयमानान्यपि परमार्थतः तिरोहितसच्चिदानन्दात्मकान्येव। तिरोधानक्रमेण त्ववरोहस्य पराकाष्ठामागत्य सच्च चिच्चानन्दश्च विलीयन्ते। आरोहक्रमेण चैतान्येव तत्त्वानि पुनराविर्भवन्ति। एतेषामाविर्भावश्चानुक्रमिको भवति। किञ्चिदपि तत्त्वं युगपदेव नोत्पद्यते। सत्तत्त्वस्याविर्भावः प्रथमं तावत् शक्तिस्वरूपो भवति, तदनन्तरं च वस्तुस्वरूपः। एवमेव चित्तत्त्वस्यादिम आविर्भावो नाडीतन्त्रवाह्यमानक्षीणसंवेदनस्वरूपो भवति, तदनन्तरं तु शनैः शनैरैन्द्रियकसंवेदनस्वरूपः, मानसज्ञानस्वरूपश्च। अनेनैव प्रकारेणानन्दस्यादिमाभिव्यक्तिर्नाडीतन्त्रवाह्यमानसंवेदनस्वरूपिणी भवति। अनुकूला संवेदना तावत् सुखात्मिका भवति, प्रतिकूला च दुःखात्मिका। एते आनुकूल्य-प्रातिकूल्ये च नाडीतन्त्रसामर्थ्यजन्ये भवतः। या संवेदना त्वेकस्मिन्नाडीतन्त्रे दुःखमुत्पादयति सैवान्यस्मिन्नाडीतन्त्रे सुखमुपजनयति। सामर्थ्यासामर्थ्यविभेदस्तावत् चित्शक्त्यभिव्यक्त्यानुक्रमिकत्वनिर्भरो भवति। यदा तु किञ्चिन्नाडीतन्त्रं काञ्चित्संवेदनां वोढुं समर्थं भवति तदा सुखमनुभूयते, यदा चासमर्थं तदा दुःखम्। एष एव नियमः सोपानान्तरेष्वपि परिलक्ष्यते। यस्मिन् ज्योतिषि दुर्बलदृष्टिः दुःखमनुभूयते, तस्मिन्नेव ज्योतिषि प्रबलदृष्टिस्तावत् सुखम्। यः शब्दः कस्यचित्कृते कर्णकटुर्भवति, स एवान्यस्य कृते कर्णमधुरः। एवमेव कस्याश्चिदपि भावनायाः सुखमयत्वं दुःखमयत्वं वा तद्ग्राहकस्वरूपमनसः शक्तिमात्रामवलम्बते। मनश्शक्तिवर्धनेन दुःखात्मिकापि भावना सुखात्मिकेत्यनुभवितुं शक्यते।

एष एव तर्कः पापविषयेऽप्युपयुज्यते। पापपुण्ये तावन्न जडपदार्थविषयभूते। न हि कमपि प्राणिनं हत्वा प्रवातः कदाचित् पापभाग्भवति। किं बहुना, पापभावना खलु पशुपर्यन्तमप्यलब्धावकाशा। कस्यचिद् हिंस्रपशोः कृते पापीत्युक्तिर्न क्वचिद् व्यवहारपदवीं गताऽवलोक्यते। पापभावना तु मनुष्येष्वेव चरितार्था भवति। मनुष्येष्वपि वर्गाद् वर्गान्तरं प्राप्यैतस्या भावनाया मानदण्डो भिद्यते। यत्कर्म त्वेकस्मिन् जनसमुदाये पुण्यात्मकं भवति तदेव कर्म समुदायान्तरे पापात्मकमित्यवमन्तुं शक्यते। किं बहुना, कालनिमित्तभेदेनैषा भावना प्रतिव्यष्ट्यपि विभिन्नकोटिकेन मानदण्डेन मेया भवति।

जनसंहारो नाम पापात्मक इति व्यवस्थितेऽपि, भगवद्गीतायां "यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते, हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते" इति सानुमोदनं प्रतिपादितम् ।[५] आत्मज्ञानप्रतिष्ठितः "स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन" इत्युपनिषद्यपि श्रुतम् ।[६] एतस्माज् ज्ञायते पापपुण्यभावना खलु मनुष्यानुगतव्यावहारिकचैतन्यमात्रोपनिबद्धेति । यदा तु मानवव्यष्टिः समष्टिं प्रत्यात्मोत्तरदायित्वमभिज्ञातुं प्रारभते तदा व्यष्टिसमष्ट्योरन्योन्यक्रियाप्रतिक्रियाभ्यां पापपुण्यभावनोपजायते । न त्वेतस्मादभिज्ञानात् प्रागेषा भावनोपजायते न च पश्चादेव । यथा पाशवप्रवृत्तिनिमग्नो जन एतस्या भावनाया विरहितो भवति, तथैवातिमानसचैतन्यारूढ ऋषिरेतस्या अतिक्रान्तः ।

ननु यस्यां कस्याञ्चिदप्यवस्थायां दुःखमनुभूयताम्, पापकर्म क्रियताम्, अशिवं चाशङ्क्यता नाम, समस्या त्वेषा किमर्थं खलु सच्चिदानन्दजाते जगत्येतैरवकाशो लब्ध इति । अपि नाम सच्चिदानन्दो जीवान् दुःखितान्, पापक्लिष्टान्, अशिवोत्पीड्यमानांश्च दिदृक्षते ? एवं सति त्वात्मस्वरूपात् च्युतोऽसौ रागद्वेषान्वितस्य मानवस्य कोट्यां निपतिष्यति । पुनश्चापरे केचिन्मन्यन्ते यज्जीवान् सत्पथे प्रवर्तयितुं तैश्चात्मकर्तारं स्मारयितुमीश्वरो दुःखपापाशिवादीनि विदधातीति । एवं सति तु यावदेकत ईश्वरस्य सर्वशक्तिमत्त्वं बाधितं भवति तावदन्यतस्तस्य स्वार्थपरत्वमभिव्यज्यते । सर्वशक्तिमत ईश्वरस्याशक्यं नाम न स्याद् यदसौ दुःखादिदण्डं विनैव जनान् सत्पथे चालयेत् । जनैरात्मानं स्मारयितुं दुःखादीनि विदधत् असावात्मप्रभावविस्तारचिन्तातुरनृप इव प्रतीयते य आत्मनिमित्तं जनान् क्लिश्नाति, दण्डयति, भाययति च । एतद्विध ईश्वरः खलु लोकदिशाप्यनैतिकः प्रतीयते ।

एवं प्राप्ते सति, श्रीअरविन्द एनां समस्यामित्थं समाधत्ते । प्रथमं तावत् सच्चिदानन्दस्यैव जगद्रूपेण परिणतत्वात्, यत्किञ्चिदपि जागतिकं दुःखादिमयत्वं तन्नाम तस्यानैतिकत्व साधयितुमक्षमम् । आत्मेतरानेव हि प्राणिनः पीडयन् कश्चिज्जनोऽनैतिकत्वाधिक्षेपमर्हति, न त्वात्मानमेव । नन्विदानीमपि चेदाशङ्क्यतां किमर्थमसावात्मानमेव पीडयतीति, तर्हि श्रीअरविन्द आरोहप्रक्रियान्तर्गतानुक्रमिकत्वमुखेन प्रत्युत्तरति । परिणामानन्दलिप्सुः सच्चिदानन्दो जगद्रूपेणात्मानं प्रस्तौति इति तु

---

५. भगवद्गीतायाम्, १८।१७.

६. बृहदारण्यकोपनिषदि. ४।३।२२.

प्रागेव विवृतम् । अथ यावत् सदानन्दो यौगपदिको भवति तावत् परिणामानन्द आनुक्रमिकः । आनुक्रमिकत्वनिमित्तं त्वानन्देन ससंयमाभिव्यञ्जितेन भवितव्यम् । अभिव्यक्तिगतः संयमस्त्वभिव्यक्तिविषयम्, देशकालनिमित्तसापेक्षतया, उच्चावचेनाविर्भवितुमनुमन्यते । तथा हि, काव्यसर्जनप्रागेव साकल्येनास्वादितं मूलभूतं रसं कविः साधारणीकरणनिमित्तमनुक्रमेणाभिव्यञ्जितुमपेक्ष्यते । एतस्यामनुक्रमलक्षणायामभिव्यक्तौ त्वसौ मूलभूतरसास्वादादवतीर्य क्वचिदल्पसुखात्मकं दृश्यमुपस्थापयति, क्वचिद्दुःखात्मकमपि । अतएव काव्येषूल्लासादिभिः सह विषादादीनामपि योजना दृश्यते । अथ विषादांशमात्रपाठकः काव्यविशेषं तु दुःखायैव सृष्टमित्यनुमातुमर्हति । सर्वांशपाठकस्तु सम्पूर्णमपि काव्यमानन्दप्रदमिति मन्यते, आनन्दमात्रस्यैव न्यूनाधिकमात्रायां रूपभेदेनाभिव्यञ्जितत्वात् । एवमेव सदानन्दभूतः सच्चिदानन्दो यदा परिणामानन्दनिमित्तं जगत् सृजति, तदाऽऽत्मानन्दस्यानुक्रमिक्यभिव्यक्तिरपेक्ष्यते । एतावता तु नानुमेयं यदसावानुक्रमिकाद् भिन्ने पथे प्रचलितुमसमर्थ इति, तस्य सर्वशक्तिमत्त्वात् । अतिमानसे लोके तावदात्माभिव्यक्तेर्यौगपद्यमेव लक्ष्यते, आर्षप्रमाणात् । अथैतावता केवलमेतदेव बोध्यते यदस्मिन् जगति, सच्चितोरभिव्यक्तिवत्, आनन्दाभिव्यक्तावप्यानुक्रमिकत्वं प्राप्यते इति । अपरं च, सानुक्रमाभिव्यक्तेनानन्देनांशिकेन भवितव्यम् । आंशिकश्चानन्द उच्चावचो भवति, उच्चावचविशिष्टश्चानन्दः सुख-दुःखलक्षणः ।[७] सुखदुःखयोरनुभूतिस्तावद् वैयष्टिकी भवति । समष्टिसापेक्षत्वं गता सत्येषैव पापपुण्यभावेन परिणमते । अथाभिव्यक्तिगतानुक्रमिकत्वोत्पन्नं दुःखपापादिकम्, अंशतः पृथक्कृत्यालोचितं सत्, अस्पृहणीयम्, अदिव्यं च प्रतीयते । एतदेव साकल्येनालोचितं सत् सच्चिदानन्दाभिप्रेतपरिणामानन्दपोषकत्वेन ज्ञायते ।[८]

दुःखं खल्वानन्दपोषकम्, पापं च चैतन्योद्बोधकमित्येनं सिद्धान्तमुदाहर्तुं श्रीअरविन्दो भाववैषम्यस्य सिद्धान्तं पुरस्करोति । सृष्टिरहस्योन्मीलनार्थमेकं सुलभं साधनं मानवस्वभाव इत्यसौ मन्यते । आत्मतिरोधानपूर्वकमात्मान्वेषणं तावच्चैतन्याय सर्वाधिकमानन्दप्रदमिति तन्मतिः । वियोगपूर्वकः संयोगो हि महत्तरमानन्दमुपनयति । कस्यचिद् विजयस्याह्लादकत्वं च तन्निमित्तकृतायाससापेक्षं भवति । अज्ञानमपि, ज्ञानप्राप्त्यवसरप्रदायकत्वात्, आकर्षणमावहति । अतएव सच्चिदानन्द आत्मानमसति, अचिति, निरानन्दे च तिरोधत्ते । तिरोधानपूर्वकेणात्मान्वेषणेनासावात्मविपरीते भावेऽन्विष्यात्मानं परिणामानन्दसमृद्धं करोति ।[९] अतएवासावेतादृशमारोहपथं

---

७. तस्मिन्नेव, पृ० १२८.

८. तस्मिन्नेव, पृ० ४७६.

९. तस्मिन्ने पृ० ४८७—८.

वृणुते यथा दुःखपापाशिवादीनामनुभूतिर्जायेत ।

अथैतस्माद् विवेचनादवगन्तुं शक्यते कथं नाम दुःखादिभ्यो मुक्तिः स्यादिति । यदा जागतिकानुभूतेरांशिकत्वं तावद् दुःखादीनां कारणम्, तदा तत्साकल्येन खल्वेतानि निवारयितव्यानि स्युः । एतदांशिकत्वं च मानसचैतन्यविभाजकत्वजन्यमित्यवबोद्धव्यम् । एतस्य चैतन्यस्योदयेनैव साधँ दुःखादिकमुपजायते, एतस्य समुच्चयेनैव सार्धं चोपचीयते । एतस्योदयसमकालमेव हीन्द्रियसंवेदनया सह दुःखमात्रमनुभूयते; विकासपथे प्रसृत्य स्मृतावुपचितायामशिवम शङ्क्यते; आसामष्ट्यावगतिप्रादुर्भावाच्च पापभावनाऽऽविर्भवति । अथांशिकानुभूत्यधिष्ठानभूतस्य मानसचैतन्यस्यातिक्रमणेनैव दुःखादिकं निराकर्तुं शक्यते इति श्रीअरविन्दस्य निष्कर्षः ।

भारतीयचिन्तनपरम्परायां श्रीअरविन्दपूर्वं दुःखादीन्यधिकृत्यानेकानि मतानि प्रतिपादितानि नाम । तथा हि, सांख्यैर्दुःखादीनि खल्वज्ञानजन्यानीति मन्यते । अज्ञानं तु प्रकृतिपुरुषाविवेकलक्षणम् । जगदप्येतस्यैवाज्ञानस्य प्रसूतिः । अथाविवेकलक्षणाज्ञानजन्यत्वात्, एतदपि निसर्गत एव दुःखादिमयम् । अनेन प्रकारेण यावज्जगत् तावद् दुःखादिकम् । एवं सति, दुःखादेर्विमुक्तिस्तावज्जगद्विनाशपूर्वकमेव सम्भाव्यते । नन्वेषः सांख्याभिमतो दुःखादिविनाशोपायस्तु रोगविनाशोद्दिष्टरुग्णविनाशोपक्रमतुल्यः । भगवान् बुद्धोऽपि दुःखं तावत् संसारस्य प्राथमिकं धर्ममिति मन्वानो दुःखादेर्निवृत्त्यर्थं संसारविनाशनमेवोपदिशति ।

वेदान्ताचार्या अपि न्यूनाधिकमेवमेव मन्यन्ते । तथा हि, श्रीशङ्कराचार्यो दुःखादीनां कारणं साधारणविशेषभेदेन द्विविधं मन्यते । साधारणं कारणमीश्वरः, विशिष्टं तु जीवकृतं कर्म । कर्मणा तावदुत्तरोत्तरं दुःखादिकमुत्पाद्यते । संसारस्यानादित्वात्, अत्रानवस्थायास्त्वप्रसङ्गः । जीवस्याज्ञानोपहितत्वात्, तत्कृतं कर्म मलिनमथ दुःखादिजनकम् । ईश्वरोऽत्र तथैव साधारणं कारणं यथा स्वस्वबीजेभ्यो जायमानानां व्रीहियवादीनां पर्जन्यः साधारणं कारणं भवति ।[10] एतदुभयविधमपि कारणं परमार्थतोऽविद्याजन्यम् । "यथा हि सविता नित्यप्रकाशरूपत्वाल्लोकाभिव्यक्त्यनभिव्यक्तिनिमित्तत्वे सति लोकदृष्टिविपर्ययेणोदयास्तमयाहोरात्रादिकर्तृत्वाध्यारोपभाग्भवत्येवमीश्वरे नित्यविज्ञानशक्तिरूपे लोकज्ञानापोहसुखदुःखस्मृत्यादिनिमित्तत्वे सति लोकविपरीतबुद्ध्याध्यारोपितं विपरीतलक्षणत्वं सुखदुःखादयश्च, न स्वतः ।"[11] जीवस्यापि विशेषकारणत्वम्, पञ्चकोशलक्षणोपाधिमात्रजन्यत्वात्, परमार्थतोऽविद्यात्मकमिति मन्तव्यम् ।

---

१०. श्रीशङ्कराचार्यस्य. ब्रह्मसूत्रभाष्ये, २।३।४२.

११. तस्यैव, कठोपनिषद्भाष्ये ३।१.

अथोभयविधकारणस्याविद्याजन्यत्वात्, तत्परिणामभूतं दुःखादिकमप्यविद्यात्मकमेव स्यात् । एवं सति, विद्यया दुःखादिकं नाम तथैवापसार्यं भवति यथा ज्योतिषा तमः । किं तु जगन्मूलकत्वात्, एतेषामात्यन्तिको विनाशस्तावत् तदैव भवितुमर्हति यदा जगदेव विनष्टं भवेत् । अथ शाङ्करमतेनापि दुःखादीनां विनाशो जगद्विनाशपूर्वकमेव भवितुमर्हति ।

श्रीरामानुजाचार्यस्तावद् दुःखादिकस्य याथार्थ्यं स्वीकरोति, तद्विशेषकारणभूतकर्मणः, तदाश्रयभूतजीवस्य, तत्साधारणकारणभूतेश्वरस्य च । किं त्वसावेतद् याथार्थ्यमीश्वरस्य जगतश्च मध्ये किमप्यतर्कसङ्गतं सम्बन्धं परिकल्प्यैवोपपादयितुं क्षमते । तथा ह्यसौ जगत ईश्वरस्य च मध्ये एतादृशं शरीर-शारीर-सम्बन्धमन्विष्यति यथा शरीरस्य व्यापारेण शारीरो मनागपि न संस्पृश्येत् । अथ "स्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैः सर्वेश्वरो न संस्पृश्यते इति तस्य तर्को दुःखादिसाधारणकारणभूतेश्वरस्य दुःखाद्यस्पृश्यत्वसिद्धये ।"[१२] परं तु शरीर-शारीरमध्ये, अथ च जगद्-ईश्वरमध्ये एतादृशो व्यवधानस्य सन्निधानं दुःखादिविषयकसमस्यायाः समाधानस्यानपेक्षितं सुमहत् प्रतिमूल्यं नाम । श्रीअरविन्दीयं समाधानं तु नैवैतादृशं व्यवधानमपेक्षते, न च कस्यचित् तत्त्वस्यासत्त्वसाधनमेव । अत्रैव तद्वैशिष्ट्यम् ।

---

१२. श्रीभाष्ये, १।४।२२.

## नवमोऽध्यायः

# कर्मवादप्रतियोगिचैतन्यविकासवादः

भारतीयचिन्तनपरम्परायां कर्मवादस्तावत् चिरात् सुप्रतिष्ठितं पदं लभते। पूर्वतरकृतं कर्म नियतोपभोज्यं फलं गृह्णातीत्येतस्य वादस्याधारभूतः सिद्धान्तः। एतदनुसारम्, सत्कर्मणः फलं सद् भवत्यसत्कर्मणश्चासत्। अपरं च, स्वकर्मानुसारमेव कर्ता पुरस्क्रियते दण्ड्यते वा। यत्सत्यं कर्माणि प्रत्यक्षत एव फलोद्ग्रहानीव प्रतीयन्ते। परं बहूनि कर्माणि तु निष्फलानि विपरीतफलानि चाप्यनुभूयन्ते। ननु कर्मवाद आधारभूतश्चेत्, तर्हि कर्मजातेन सफलेनानुरूपफलेन च भवितव्यम्। एषा विप्रतिपत्तिस्तावत् पूर्वोत्तरजन्मसिद्धान्तमुखेनापाकर्तुं चेष्टिता।

अथ केचिन्मन्यन्ते यत् स्वकर्मानुसारं कर्ता देहपरित्यागानन्तरं स्वर्गं नरकं वा गच्छति यत्रासौ जीवनकालेऽभुक्तं कर्मफलं भुङ्क्ते, भोगेन फले निःशेषे जाते चेश्वरसन्निधौ शाश्वतकालाय प्रतिष्ठाप्यते। बौद्धास्तु कर्मविपाकमेव जन्मजन्मान्तरकारणं मन्यन्ते। तेषां मतेन देहावसानकाले भोगावशिष्टः कर्मसंस्कार एव देहान्तरनिर्माणहेतुः। एषा जन्मजन्मान्तरपरम्परा किल तावन्न विरमति यावत् कारणकार्यशृङ्खला सम्यग्ज्ञानेन न विच्छिद्यते। वेदान्तसाङ्ख्यप्रभृतीतरेषु दर्शनसिद्धान्तेषु सञ्चित-प्रारब्ध-क्रियमाणभेदेन कर्मणः त्रैविध्यं निरूपितम्। सञ्चितकर्म तु तद् यत् पूर्वजन्मकृतं सदद्यपर्यन्तं सुषुप्तभावेनावस्थायागामिकाले परिणामोन्मुखं भवति। प्रारब्धकर्म तु तद् यदिदानीं फलति, यस्य च सद्भावाद् वर्तमानं जन्म सम्भवति। क्रियमाणं कर्म च तद् यत् सम्प्रति कृतं सत् आगामिकाले परिणामं लप्स्यते। एवं यावत् प्रारब्धकर्म वर्तमानजीवनव्यापारं निर्धारयति तावत् सञ्चितक्रियमाणकर्मणी भाविजीवनक्रमं नियच्छतः। तत्रापि सञ्चितकर्मप्रभावक्षेत्रमनेकजन्मजन्मान्तरव्यापीति मन्यते। अथ यानि कर्माणि साम्प्रतिके जीवने फलं गृह्णन्ति तानि सर्वाण्येवाव्यवहितपूर्वजन्मकृतानीति खलु नानुमेयम्। एवमेव यानि कर्माणि त्विदानीन्तनानि, तानि सर्वाण्येवाव्यवहिताग्रिमजन्मनि फलं ग्रहीष्यन्तीत्यपि तावन्नाश्वासनीयम्। अनेन प्रकारेणानेकजन्मजन्मान्तरगतानि कर्माणि प्रारब्धकर्मरूपेण क्रियमाणं कर्म प्रभावयन्ति, क्रियमाणसञ्चितकर्मरूपाभ्यां च भाविजन्म प्रादुर्भावयन्ति। अथ व्यष्टेर्निखिलोऽपि जन्मजन्मान्तरक्रम कर्मरज्जुबद्धः सन् पूर्वनिर्धारित इति स्वीक्रियते। व्यष्टिसङ्घात-

स्वरूपत्वात्, समष्टिरपि कर्मरज्जुबद्धा सती यन्त्रवच्चालिता मुहुर्मुहुः सृष्टिप्रलयमध्ये भ्रमतीति मन्यते । व्यष्टिसमष्ट्योर्विभ्रमे प्राक्तनकर्म एव कारणं मतम् । सत्यं यद् ब्रह्मसूत्रे सृष्टिस्तावद् ब्रह्मलीलार्था मता । परं त्वेषा नाम व्यष्टिकृतकर्मफलसरणिमनुसरन् कारणकार्यपरम्परया घटीयन्त्रवच्चाल्यते इति तदभिप्रायः । तथा हि सृष्टिप्रलयपरम्पराया अनादित्वं स्वीकुर्वाणाः श्रीरामानुजप्रमुखा वेदान्ताचार्या व्यष्टिकृतकर्मफलवासनायाः तृप्त्यर्थमेव जगत् सृज्यते इति प्रतिपादयन्ति । अथ तेषामभिमता समष्टिरपि व्यष्टिकृतकर्मफलोपभोगक्षेत्रत्वेन कर्मरज्जुबद्धा भवति ।

एतस्माद् विवेचनात् किन्न दृष्टिपथमायाति यत् कर्मवादः प्रामुख्येन त्रिपादाधृतः । एते पादास्तु सृष्टेः पापपुण्यात्मकत्वम्, पापपुण्ययोरन्योन्यविपरिणामशीलत्वम्, सृष्टेर्यान्त्रिकत्वं च । नन्वेतेषु त्रिष्वपि पादेषु कोऽपि पादो निखिलसृष्टिव्यापको न प्रतीयते । तथा हि, यावत् पापपुण्यलक्षणकर्मोपजायमानत्वाज्जागतिकपदार्थजातेनाचारशास्त्रपरेण भवितव्यम्, तावत् पापपुण्यभावना, आचारशास्त्रीयो नियमो वैतस्य स्वल्पांशमात्रमेव व्याप्नोति । सूर्य उदेति, पवनः प्रवहति, मेघो वर्षति, अग्निस्तपति, भूमिश्चलति न खलु किमपि पापमपाकर्तुं पुण्यं वाऽर्जितुम् । वस्तुतस्तु मानवचैतन्यांशविशेषव्यतिरिक्तः कोऽपि जागतिको व्यापारः पापपुण्यभावनोत्प्रेरितो न प्रतीयते । एवं सति, एतद्भावनोपर्याधृत आचारनियमः कथमपि निखिलसृष्टिव्यापारप्रेरकत्वेन नियामकत्वेन च ग्रहीतुं न शक्यते ।[1]

कर्मवादस्यापरः पादस्तावत् तैर्निदर्शनैः प्रस्तूयते यत्र कश्चित् सज्जनः परिपीड्यते दुर्जनश्च सुखमयं जीवनं यापयति । एतद्विधनिदर्शनाश्रयेण मन्यते यदस्मिन् जन्मनि चेत् सत्कर्म कुर्वन्नपि सज्जनः परिपीड्यते, दुष्कर्म कुर्वन्नपि च दुर्जनः सुखमाप्नोति, तर्हि पूर्वजन्मनि तेन सज्जनेन किञ्चिद् दुष्कर्म कृतं स्यात्, दुर्जनेन च किञ्चित् सत्कर्म । ननु सज्जनस्य सम्पूर्णमपि वर्तमानजीवनं दुःखमयं चेत्, दुर्जनस्य च सुखमयं, तर्हि समग्रेऽपि पूर्वजन्मनि सज्जनेन दुष्कारिणा भवितव्यम्, दुर्जनेन च सत्कारिणा । एवं सति, पूर्वजन्मन्येष सज्जनो दुर्जनो भवेत्, दुर्जनश्च सज्जनः ।[2] अत्र प्रथमं तावदेतदेवावधेयं यज्जगति सौजन्याद् दौर्जन्यपरिणामः, दौर्जन्याच्च सौजन्यपरिणामः कादाचित्क एव, न तु नियमपूर्वकः । अथ प्रस्तुतनिदर्शनेनाभिमतः परिणामोऽपि कादाचित्क एव स्यात् । एवं सति, कर्मसिद्धान्तस्तावदपवादरूपेणैव ग्रहीतुं शक्यते, न तु नियमरूपेण ।

---

१. श्रीअरविन्दस्य, लेटर्स ऑन योग, प्रथमे भागे, पृ० ४४१.
२. तस्मिन्नेव, पृ० ४४४-५.

अपरं च, कर्मसिद्धान्तस्तु तदैव सृष्टिव्यापारस्य सर्वप्रधानः सिद्धान्तो भवितुमर्हति यदा जगत् सर्वथा यान्त्रिकं भवेत्। जगत्तु नैतत्प्रकारकम्। एतस्य जडांशस्तु यान्त्रिक इत्यत्र नास्ति संशयावकाशः। एतदेव यान्त्रिकत्वमवलम्ब्य हि भौतिकविज्ञानविद्भिस्तावद् बहुविधानि यन्त्राण्याविष्कृतानि। परं तु चैतन्यांशोऽपि यान्त्रिक इत्येतन्महत्सन्देहास्पदम्। यत्सत्यम्, आत्मविकासस्य प्रथमे चरणे चैतन्यं यान्त्रिकत्वग्रस्तं भवति। किं तु ततः परमेतत् शनैः शनैः तद्विमुक्त्युन्मुखं जायते। निखिलचैतन्यविकासक्रमाधिष्ठानभूते मानवाध्यात्मन्येव यावदचेतनं प्रामुख्येन यान्त्रिकं भवति तावदवचेतनं न्यूनतरमात्रायां तथाविधं भवति। न ह्यवचेतनोद्भूताः स्वप्ना यान्त्रिकाः। चेतनमनस्तु यान्त्रिकत्व – स्वातन्त्र्ययोः समन्वयभूमिरिव प्रतीयते। एतस्माद् ह्येकतो भौतिकं विज्ञानमुपजायते, अन्यतश्च सर्वाः कला आविर्भवन्ति। चेतनमनस उपरिष्टात्तु यान्त्रिकत्वं नाम विलयोन्मुखं भवति। अधिमानसप्रभृतिचैतन्यभूमिषु चैतद् विलीनप्रायमेव।

ननु जगतो जडांशो यान्त्रिकः, चेतनांशश्च स्वतन्त्र इत्येवं सति, विचिकित्सितुं शक्यते किं स्विदेतस्याधारभूतं तत्त्वं यान्त्रिकत्वमुत स्वातन्त्र्यमिति। श्रीअरविन्दविचारपरम्परायां पूर्वोक्तरीत्या चैतन्यस्य सर्वाधारत्वे उपपादिते सति, चैतन्यधर्मभूतं स्वातन्त्र्यमेव मूलतत्त्वरूपेण ग्रहीतव्यम्, न तु जडतत्त्वधर्मभूतं यान्त्रिकत्वम्।

अनेन प्रकारेण निश्चीयते यान्त्रिकत्वाधृतस्य कर्मसिद्धान्तस्य वैश्वसिद्धान्तत्वेन गुणीभावत्वम्।[१] गुणीभूतः सिद्धान्तस्तु न कथमपि चरमलक्ष्यनियामको भवितुमर्हति। अथ जगत् कर्मफलभोगभूमिमात्रमिति नोपपद्यते। एवं सति, तानि सर्वाणि मतानि निराक्रियन्ते यानि पूर्वसृष्ट्यन्तर्गतव्यष्टिकर्मफलभोगमेव वर्तमानसृष्टेः प्रयोजनमिति प्रतिपादयन्ति। व्यष्टिसमष्टी खलु परमतत्त्वाभिव्यक्तिध्रुवद्वयभूते इति मन्वानः श्रीअरविन्दस्तु समष्टिगतान् सिद्धान्तान् व्यष्टिविषयेऽपि प्रयोगार्हान् मन्यते। एवं सति, जडांशे यान्त्रिकत्वावबद्धा व्यष्टिश्चेतनांशे स्वातन्त्र्यलक्षणा स्यात्। अथ कर्मसिद्धान्तेनापि चैतन्यस्वातन्त्र्यमूलस्य कस्यचिदपरस्य सिद्धान्तस्याश्रितेन भवितव्यम्। तत्सिद्धान्तानुसारं कर्मफलभोग एव जन्मान्तरकारणं न स्यात्। एतावता निश्चीयते यत् सृष्टिर्जन्मान्तरं च कर्मफलभोगव्यतिरिक्तप्रयोजने स्तः। ननु किं नाम तत् प्रयोजनम्?

मायावादिनस्तु कर्मसिद्धान्तस्य भ्रमात्मकत्वमुपपाद्य तस्मान्मोक्षमेव जन्मजन्मान्तरप्रयोजनमिति मन्यन्ते। तेषां मते, कर्म सर्वथा बन्धनायैव भवति। अथ तैर्मोक्षः

१. श्रीअरविन्दस्य, लेटर्स ऑन योग, प्रथमे भागे, पृ० ४३१.

सर्वकर्मपरित्यागसापेक्षो मतः। सर्वकर्मपरित्यागार्थं च ते संन्यासमुपदिशन्ति। संन्यासकालोपजातकर्मसंस्कारनिराकरणार्थं ते तत्त्वतः कर्माश्रयभूतजगत एव मिथ्यात्वमुपपादयन्ति। तेषामभिमता सत्ता तु व्यवहार-परमार्थभेदेन द्विविधा। कर्मफलासक्तो जनस्तावद् व्यावहारिकसत्तायां भ्रमति, कर्मनिर्मुक्तश्च जनः परमार्थस्वरूपो भवति। जगत् खलु निखिलव्यष्टिसमवायकर्मानुसारमुत्पद्यते। एतादृशे जगति व्यष्टिस्तावदात्मकर्मानुसारं विविधासु योनिषूच्चावचं भ्रमति। एवं सर्वासु व्यष्टिषु परिवर्तमानास्वपि समष्टिरविकृतैव तिष्ठतीति तेषां समासार्थः।

श्रीअरविन्दस्त्वेतन्मतं नानुमोदते। व्यष्टिसमष्टी नामाद्वैतसत्ताध्रुवद्वयीति मन्वानोऽसावेतत्स्वीकर्तुं नोत्सहते यदेतयोरेका तूत्थानपतनशीला स्यादन्या च विकारातीता। तन्मतेन, व्यष्टिश्चेदुत्थानपतनशीला, तर्हि समष्टिरपि तथैव स्यात्। ननु व्यष्टेर्जन्मजन्मान्तरगतिस्तावत् सामस्त्येनोत्थानपतनलक्षणेत्यत्रापि तस्य महती विप्रतिपत्तिः। कस्मिंश्चिज्जन्मनि सत्कर्म कृत्वा काचिद्व्यष्टिरागामिजन्मन्युच्चतरजीवकोट्यारूढा सती तज्जन्मकृतकर्मपरिणामस्वरूपमन्यस्मिन् जन्मनि पुनरप्यवरोढुं शक्नोतीति तावत् सर्वे कर्मवादिनो मन्यन्ते। एतन्मतानुसारम्, कश्चित्पशुरग्रे जन्मनि मानवरूपेणाविर्भवितुं शक्नोति, कश्चिन्मानवश्च पशुरूपेण। श्रीअरविन्दमतेनैषा जन्मजन्मान्तरप्रचारप्रक्रिया खलु निष्प्रयोजना। कर्मानुसारं दण्डपुरस्कारविधानमेव ह्यस्या आधारत्वेनावशिष्यते। एतद् विधानं तु साधनमात्रमेव भवितुमर्हति, न तु साध्यसर्वस्वम्। शिशुरपि प्रयोजनान्तरमेवोद्दिश्य दुष्कर्मा सन् ताड्यते, सत्कर्मा च सन् पुरस्क्रियते। व्यष्ट्यापि जन्मजन्मान्तरप्रचारे एवमेव भवितव्यम्। यथा शिशुर्जीवनपथे सम्यक्प्रकारेणाग्रेसर्तुमेव दण्ड्यते पुरस्क्रियते वा, तथैव व्यष्टिविषयेऽपि भवितव्यम्। तस्मिन् व्यक्तित्वस्यैव सर्वप्राधान्यात्, शिशुस्तावत् तदर्थमेव दण्ड्यते पुरस्क्रियते वा। जन्मजन्मान्तरसरणशीलव्यष्टौ त्वात्मचैतन्यस्य केन्द्रभूतत्वात्, तदर्थमेव दण्डपुरस्कारविधानं भवितव्यं नाम। अथात्मचैतन्यविकास एव जन्मजन्मान्तरप्रचारस्य चरमं प्रयोजनं स्यात्। एवं सति, व्यष्टिस्तावज्जन्ममृत्युमार्गेणात्मचैतन्योत्थानदिश्युन्मुखा स्यात्।

नन्वेषा चैतन्योत्थानप्रक्रिया किल महतीं क्षतिं प्राप्स्यति चेद् व्यष्टिः कदाचित्तु पशुत्वादुत्थाय मानवत्वमारोहेत्, कदाचिच्च मानवत्वात्पशुत्वमवरोहेत्। अपरं च, एतन्मतावलम्बिभिः खलु स्वीकर्तव्यं यत् सृष्टिव्यापारप्रवर्तकं चैतन्यमेतावन्मात्रं विमूढमस्ति यथैतत् कार्याकार्यमध्येऽपि विवेकं कर्तुमक्षमम्। परमेष निष्कर्षस्तु तच्चैतन्यस्वभाववैपरीत्यादग्राह्यः। पुनश्च, पशुमानवचैतन्ये खल्वेतावन्मात्रमन्योन्यविविक्ते स्तो यथैकस्मिन्नेव जीवनमृत्यवन्तराले एतयोरन्योन्यविपरिणामोऽसम्भाव्यः प्रतीयते। मन्ये

यदेकस्मिन्नेव जीवनकाले सुदीर्घसत्कर्मपरम्परापरिणामस्वरूपं चैतन्ये वैशद्यमुत्पत्तुमर्हति, सुदीर्घदुष्कर्मपरम्परापरिणामस्वरूपं च सङ्कोचो नाम। परं त्वेते सङ्कोचवैशद्ये खल्वेतावन्मात्रे भवितुं नार्हतो यथा मानवत्वात् पशुत्वं प्रतिपादयेतां पशुत्वाद्वा मानवत्वम्।[४] चेदेतादृशः परिणामः क्वचिद् घटतेऽपि, असौ त्वपवादस्वरूप एव स्यात्। न चैतेनापवादेन विकाससिद्धान्तः कथञ्चिद् बाध्यते।

ननु व्यष्टयश्चेत् पुनर्जन्मद्वारेण चैतन्यविकासोन्मुख्यः क्रियन्ते, तर्हि समष्टिव्यापारेणापि चैतन्यविकासपरेण भवितव्यम्। एष तर्कस्तावदनया पृथिव्यापि निदर्श्यते। कतिपयकोटिवर्षपूर्वं निश्चेता सत्येषाऽनुक्रमेण वनस्पतिकीटपशुमानवचैतन्यमयी सञ्जाता। एतस्मिन् महत्कालान्तराले खल्वसङ्ख्याभिर्व्यष्टिभिः स्वस्वजीवनकालकृतेनोद्योगेन मृत्युव्यवस्थापितपरिणामेन चैषा शनैश्शनैश्चैतन्यस्येमां कोटिमानीता। एतस्याः चैतन्यविकासपरम्परायाः पर्यालोचनानन्तरं दण्डपुरस्कारसिद्धान्तः खलु सुदुर्बलतरः प्रतीयते। कस्माद् हेतोः कतिपयलक्षवर्षपूर्वं पाशवव्यष्टय एव लोकान्तरादत्र प्रेषिताः? शरीरसम्पत्तौ मानवः खल्वनेकपशुवर्गसदृशः। ननु तेषु तेषु पशुवर्गेषूत्पद्यमानेष्वपि यन्मानवस्तदानीमत्र नोत्पेदे, तत्तु विकासप्रक्रियागतविशिष्टकारणवशं स्यात्। श्रीअरविन्दमतेन, विकासः खलु न केवलं भौतिको भवति, अपितु चैतन्यमपि व्याप्नोति। तदानीं तु मानवशरीरसंवर्धनार्हा सत्यपीयं पृथिवी चैतन्यविषये मानवपर्यन्तं नागता भवेत्। कालक्रमेण तु शनैश्शनैः तत्सन्निकृष्टा सत्येषा मानवमप्यात्मगर्भात् प्रसूतवती।

मृत्योरूर्ध्वं व्यष्टयस्तावत् स्वस्वकर्मानुसारं लोकाल्लोकान्तरं गच्छन्तीत्येतत्प्रतिपादकं लोकसामान्यं मतमप्यंशतोऽवितथमिति श्रीअरविन्दो मन्यते। तन्मतेन, कस्यचिद् व्यष्टिचैतन्यस्य लोकाल्लोकान्तरगमनं नाम न तथा व्यष्टिकर्माश्रितं भवति यथा तच्चैतन्यकोट्याश्रितम्। पाशवचैतन्यस्य जडजीवनतत्त्वयोरसम्यङ्निस्सृतत्वात्, कश्चित् पशुः कियानपि सत्कर्मशीलः सन् पृथिव्या बहिर्गन्तुं न शक्नोति। मानवचैतन्यं तु, एताभ्यां तत्त्वाभ्यां सुतरां विविक्तत्वात्, आत्मविकासकोट्यनुरूपं लोकान्तरं प्रयातुं सर्वथा समर्थं भवति। लोकान्तराणि त्वनेकविधानि। ग्रहनक्षत्रतारकादिस्वरूपो दृश्यमानो लोकस्तु पार्थिवः। एतद्व्यतिरिक्ता विविधचैतन्यकोटिसमस्वभावका बहवोऽन्येऽपि लोका भवेयुर्नाम। एवं चैतन्यगतं कोटिभेदमाश्रित्य जीवनलोकमनोलोकोच्चतरमनोलोकप्रकाशमानमनोलोकान्तर्ज्ञानलोकाधिमानसलोकातिमानसलोकपरार्धलोकाभिधाः लोकाः सम्भवेयुः।

---

४. तस्मिन्नेव, पृ० ४४५—६.

अथात्मविकासानुरूपं मानवचैतन्यं तावत् पृथिव्या उत्थायेतरेषु पार्थिवलोकेष्वपि सङ्क्रमितुं शक्नोति, एतेषु पार्थिवभिन्नेषु लोकेष्वपि। पार्थिवलोकान्तर्गतसङ्क्रान्तिस्तावद् दैशिकं प्रयाणमपेक्षेत। जीवनप्रभृतिलोकानां पार्थिवलोकानुव्याप्तत्वात्, एतेषु सङ्क्रमणं तु निर्दैशिकमपि भवितुमर्हति। अथैतस्मिन्नेवपार्थिवे लोके वर्तमानः सन् कश्चिन्मानव आत्मचैतन्यकोट्यनुरूपिणीं लोकान्तरनिवासप्रतीतिं कर्तुं शक्नोति।[५] एषा प्रतीतिश्च न कर्ममात्रावलम्बना भवितुमर्हति, उच्चतरेषु लोकेषु कर्मणश्चैतन्यरूपेण परिणतत्वात्।

यथा खलु जडशक्तिसङ्घातभूतमन्नं शरीरेणाङ्गीक्रियमाणं सज्जीवनशक्तिरूपेण परिणमते, मनसाङ्गीक्रियमाणं च सच्चैतन्यरूपेण, तथैव भौतिकी क्रिया जीवितशरीरमाध्यस्थ्येनाभिव्यक्ता सती कर्मेत्यभिधीयते, मानसव्यापाररूपेण च परिणता सती चैतन्यमिति। अथ सर्वेषामेव कर्मणां परिणतिश्चैतन्यरूपेण भवितव्या, चैतन्यादेव तेषामुद्भवात्, चैतन्योन्मुखमेव चारोहशीलत्वात्।

ननु विविधप्रकारकाणां विकाससिद्धान्तानां मध्ये समन्वय उपस्थापयितुं शक्यते। तथा हि, यावद् भौतिकविज्ञानविदो भौतिके एव विकासे आस्थावन्तः, जीवविज्ञानविदो जैवशरीरविकासे एव जीवकर्तृत्वान्वेषणपरा दर्शनविदो जीवनकृतकर्मण एव विकासे, तावद् भूतादीनां चैतन्यपरिणामदर्शी श्रीअरविन्द एतान् सर्वान् विकाससिद्धान्तान् तत्तत्प्रदेशव्यवच्छेदेन यथार्थभूतान् स्वीकुर्वन्नप्यात्यन्तिकत्वेन चैतन्यस्यैव विकासमुत्प्रेक्षते।

---

५. दि लाइफ डिवाइन, पृ० ६६२-७२.

## दशमोऽध्यायः

# मायावादनिरासः

भारतीयचिन्तनपरम्परायामुपनिषत्कालादेव प्ररोहोन्मुखो मायावादः श्रीशङ्कराचार्येण सुसिद्धान्तित इति तु विदितप्रायमेव। ततः परं श्रीरामानुजप्रभृतिष्वाचार्येषु तदुच्छेदपरेषु सत्स्वप्यसौ सर्वेषां वेदान्तसिद्धान्तानां मध्ये केन्द्रभूत इव विद्यते। एवं सति, कोऽपि वेदान्तसिद्धान्तप्रतिपादकः तदालोचनपरायणो वैनमुपेक्ष्याग्रेसतुं न शक्नोति। अथ श्रीअरविन्देनाप्येनमधिकृत्य सुदूरं पर्यालोचितम्। प्रथमं तावदेतदेव विचारणीयं कस्माद् हेतोरेष सिद्धान्तो विविधप्रकारेणापलापितोऽप्यद्यपर्यन्तमचलां प्रतिष्ठां लभते जनमानसे।

मायावादः किल जगज्जीवननैराश्योद्गत इति तावत् श्रीअरविन्दस्य प्रथमः कल्पः। जगति हि यावदेकतः साफल्यं प्राप्यते तावदन्यतोऽसाफल्यम्। तदुपरि साफल्यं विशेषयत्नसापेक्षं भवति, असाफल्यं च निसर्गसिद्धम्। एतत्तु यथा व्यष्टिजीवनविषये सत्यं तथैव समष्टिजीवनविषयेऽपि। तथा हि, सुचिरकालाद् विविधाभिर्व्यवस्थाभिः सुखशान्तिप्रभृतिभावान् उत्पादयितुं कृतप्रयत्नोऽपि मानवोऽद्यपर्यन्तं स्वलक्ष्याद् दूरस्थ एवेति नास्ति कस्यचित्प्रबोधवतोऽविदितं नाम। एषा वस्तुस्थितिः खलु केषुचिद् विचारशीलेषु जनेषु नैराश्योत्पादनपूर्वकं जगन्मिथ्यात्वबोधमुपजनयितुमर्हति।[1]

एतत्सामान्यावबोधव्यतिरिक्तं योगजं ज्ञानमपि मायावादोद्भावकं भवितुमर्हति। निखिलबाह्यविषयेभ्यो दृष्टिं प्रतिनिवर्त्य, सर्वान् मनोगतान् सङ्कल्पान् चातिक्रम्याध्यात्मोन्मुखो योगी समग्रामपि जागतिकीं सत्तामसद्भूतां प्रत्येतुं शक्नोति। आध्यात्मिकं चैतन्यं हि जागतिकावबोधनिराकरणपूर्वकमेवावगाह्यते। एतस्मिंश्चैतन्येऽवगाह्यमाने सति चेत् कश्चिज्जागतिकोऽवबोधोऽवशिष्यते, सोऽपि तच्चैतन्यसापेक्षतयाऽसत्कल्पः प्रतीयते। वैयक्तिकत्वातिशायिन्येतस्मिंश्चैतन्ये प्रविष्टो योगी सर्वा व्यष्टीर्नामरूपमात्रावशिष्टाः, निस्सत्त्वभूताश्च मनुते। अत्र ज्ञानं चाज्ञानं च चैतन्ये विलीयेते, चैतन्यं च मानससत्तास्वरूपं भवति। चरमबोधप्रत्यायकत्वेन सत्ताऽप्यत्रातिन्यूनं पदं प्रतीयते।

---

१. श्रीअरविन्दस्य, दि लाइफ़ डिवाइन, पृ० ४६६-७

ऐकात्म्यप्रत्ययसारभूतब्रह्मव्यतिरिक्तं पदार्थजातमत्रासदिव ज्ञायते। एतादृग्बोधनिर्भरो मायावादो व्यष्टिसमष्ट्योरसत्त्वोपपादनपूर्वकं ब्रह्ममात्रस्य सत्त्वं स्वीकरोति।[२]

नन्वतिमानसचैतन्येऽसद्भूतमिव प्रतीयमानमपि जगत् कथं नाम वस्तुतोऽसत्त्वं गन्तुमर्हति? कथं नामैतस्य सत्त्वमपलापयितुं शक्यते यदैतच्चक्षुषा दृश्यते, कर्णेन श्रूयते, घ्राणेनाघ्रायते, जिह्वयाऽऽस्वाद्यते, त्वचा स्पृश्यते, कर्मेन्द्रियैश्च प्रतिक्रियते? मायावाद-प्रतिपादकास्त्वेतादृशः प्रश्नस्य समाधानं स्वप्न-भ्रमज्ञानमुखेन प्रस्तुवन्ति। स्वप्नद्रष्टा खलु तत्कालपर्यन्तं स्वप्नस्य मिथ्यात्वं कथमपि नावगच्छति। उद्बुद्ध्य त्वसौ निखिल-मपि स्वाप्नं जगन्मिथ्याभूतमिति परामृशति।[३] एवमेव तमःस्थितां रज्जुं दृष्ट्वाऽहिरि-दमित्यवगम्य तद्भीतः कश्चिज्जनः पलायितुमुपक्रमते। कश्चिदन्यो जनो दूरात् शुक्तिं दृष्ट्वा रजतमिदमित्यभिज्ञाय तं प्रति प्रवर्तते। मरीचिकां दृष्ट्वा जलमिदमित्यवबुद्ध्य मृगः पानाय तामनुसरति। एतेषु सर्वेष्वेव भ्रमज्ञानोदाहरणेषु भ्रमकालपर्यन्तं प्रतीय-मानस्य पदार्थस्य सत्तायां कापि शङ्का नोपजायते। भ्रमोत्पन्नाः सर्वे एव पदार्था भ्रमकालपर्यन्तं सद्भूता इव तिष्ठन्ति। यथार्थविबोधे सञ्जाते त्वेतेषां किमपि नावशिष्यते। अथैतेषां मानससङ्कल्पमात्रत्वमभिज्ञायते। ननु सङ्कल्पमात्रेण कश्चिदसत्पदार्थः सदिति प्रत्याययितुं शक्यते चेत्, सदिति प्रतीयमानं जगत् कथं न तत्त्वतोऽसद्भूतं भवितुमर्हतीति खलु मायावादिनां तर्कः। यथा हि व्यावहारिकचैतन्यविरुद्धत्वात् प्रातिभासिकचैतन्य-प्रतीतः पदार्थोऽसदित्यवगम्यते, तथैव पारमार्थिकचैतन्यविरुद्धत्वाद् व्यावहारिकचैतन्यप्रतीतं जगदसदिति प्रत्येतव्यमिति तेषां निष्कर्षः।[४]

अनया रीत्योपपादितो मायावादस्तु श्रीअरविन्देनैवं निराकृतः। मायावादश्चे-ज्जीवनगतक्षणभंगुरत्वदुःखमयत्वासाफल्यभूयिष्ठत्वनिष्प्रयोजनत्वप्रभृतिधर्मेषु प्रतिष्ठापितः, तर्हि बालुकायां भित्तिन्यास इवास्थाने यत्नः कृतः। जगत्येते धर्माः प्राप्यन्ते इति तावदनपलाप्यम्। किं तु प्राप्तिमात्रेणैवैते जगतः तत्त्वभूताः स्युरिति तु कथमपि न स्वीकार्यम्। अध्यात्मचेतसा दृष्टा ह्येते धर्माः शाश्वतिकत्वानन्दमयत्वसाफल्यसप्रयोजन-त्वप्रभृतिस्वरूपा ज्ञायन्ते।[५]

यत्तु स्वप्नचैतन्यप्रतीतौ मायावादस्य प्रमुखं निदर्शनमन्विष्टं तदधिकृत्य श्रीअरविन्द एवं मन्यते। स्वप्नजाग्रच्चैतन्ये खलु मूलतो विभिन्नस्वरूपे स्तः। याव-

२. तस्मिन्नेव, पृ० ५३८, ५५७.

३. श्रीशङ्कराचार्यस्य, ब्रह्मसूत्रभाष्ये २।१।१४.

४. तस्मिन्नेव, पृ० १।४।६.

५. दि लाइफ डिवाइन, पृ० ४९९.

ज्जाग्रच्चैतन्ये पूर्वापराणामनुभवानां मध्ये पारस्परिकः सम्बन्धः, तारतम्यं च भवतः, तावत् स्वप्नचैतन्योपजाता अनुभवाः परस्परमसम्बद्धाः, अनन्विताश्च भवन्ति । तथा हि, यावत् पूर्वदिवसीयानुभवानां सातत्ये एवोत्तरदिवसीया अनुभवाः समागच्छन्ति, तावदुत्तररात्र्युत्पन्नाः स्वप्नाः पूर्वतररात्रिगतैः स्वप्नैः सह प्रायशोऽसम्बद्धा एव भवन्ति ।[६] अपरं च, यावज्जाग्रच्चैतन्यं जीवनपोतस्य कर्णधारभूतम्, तावत्स्वप्नचैतन्यं खल्वत्यल्पप्रभावकारकम् । इच्छाशक्तिपरिवेशबहिर्भावादेतत् किल प्राकृतेन स्वाच्छन्द्येन प्रेर्यते, न तु विकासमानेन प्राज्ञचैतन्येन ।[७] पुनश्च, सत्ताप्रतिबिम्बभावात् स्वप्नचैतन्यानुभवो जाग्रच्चैतन्यानुभवश्च प्रायेण तुल्याविति प्रतीयेते । स्वप्नचैतन्ये हि यथार्थोऽनुभवः स्वप्नभावेन प्रतिबिम्बितो भवति । एते प्रतिबिम्बभूताः प्रत्ययास्तावत् तस्मिंश्चैतन्ये वस्तूनीव प्रतीयन्ते । एवमेव जाग्रच्चैतन्यानुभूताः पदार्था अपि तत्त्वतः सत्ताप्रतिबिम्बकल्पाः । ननु प्रतिबिम्बानामवास्तविकत्वात्, स्वप्नपदार्थवज्जाग्रच्चैतन्यप्रतिफलितं जगदप्यसद्भूतं स्यात् ? एतावुभयविधावपि पदार्थवन्योन्यविविक्ताविति तु श्रीअरविन्दो मन्यते । तन्मतेन, स्वप्नगतानि वस्तुप्रतिबिम्बानि प्रतिबिम्बत्वात् वस्तुभावमुपगन्तुं न शक्नुवन्ति । अथ ते जाग्रच्चैतन्येन वस्तुशून्यविकल्पवत् स्मर्यन्ते । जाग्रच्चैतन्यगतानां पदार्थानां विकल्पत्वं तु निराकृतं भवति । "अत्र यद्यपीन्द्रियलब्धप्रतिबिम्बसंस्थानमात्रमेवास्मल्लभ्यं जागतिकवस्तुत्वप्रमाणं भवति, तथाप्येते प्रतिबिम्बास्तावच्चैतन्यस्थितेन केनचित् स्वतश्चालितेनान्तर्ज्ञानेन पूर्यन्ते, प्रमाणीक्रियन्ते, क्रमबद्धत्वं च नीयन्ते । एतज्ज्ञानं तु सद्य एव प्रतिबिम्बान् मूलपदार्थेन सह योजयति, पदार्थं च प्रत्यक्षतोऽनुभावयति । अथ वयं न केवलं सत्तानुवादमात्रमेवाधीयामहे, इन्द्रियलभ्यप्रतिमा एव पश्यामः, अपित्वेताद‍ृक्प्रतिमाद्वारेण सत्तामेव प्रेक्षामहे ।"[८] अथैताद‍ृशेषु नैसर्गिकेष्वन्योन्यविभेदेषु सत्स्वपि स्वप्नजाग्रच्चैतन्ययोः समीकरणम्, तन्मुखेन दर्शनसिद्धान्तोपपादनं च कथमपि तर्कसङ्गते न प्रतीयेते । स्वप्नानुभूतिस्तावत् कासांश्चिदध्यात्मानुभूतीनां साद‍ृश्यमुपस्थापयितुमौपम्येनोपयुज्येत, न पुनः सत्तास्वरूपनिर्धारणाय ।[९]

परं च, मायावादप्रतिपादकैः स्वप्नचैतन्यस्य यत् स्वरूपमुदाहृतं तत्तु प्रतीयमानमात्रमेव । वस्तुतस्त्वेतत् तस्मात् सुतरां गम्भीरतरम् । स्वप्नो नाम जाग्रच्चैतन्यगतानन्-

---

६. तस्मिन्नेव, पृ० ४९९.

७ तस्मिन्नेव, पृ० ५००.

८ तस्मिन्नेव, पृ० ५०८.

९. तस्मिन्नेव, पृ० ५०९.

मनुभवानां निष्प्रयोजनम्, असम्बद्धं चानुवादमात्रमिति मतं तावद् भ्रमपूर्णम्। न चैतदुद्गमभूतमवचेतनं कथमपि जाग्रच्चैतन्यप्रतिद्वन्द्वि, तन्निराकरणजन्मा वा। एतत्तु जाग्रच्चैतन्यस्याधारः, परिपोषकः, परिपूरकः, विश्रामभूमिश्चास्ति। मानवचैतन्यैतिह्यविदः खलु जानन्ति कथमेतदारम्भकाले केवलं संवेगमयम्, मूलप्रवृत्त्यात्मकं चासीत्। कालक्रमेण शनैश्शनैश्चैतस्मिन् विचारपरम्परायाः प्रवेशः सञ्जातः। एतस्मादेव साम्प्रतिकं जाग्रच्चैतन्यमाविर्भूतम्। विश्वविश्रुतमनोविश्लेषकेण श्री फ्रायडमहोदयेनाविततमेवोक्तं यज्जाग्रच्चैतन्यं तावदवचेतनस्यैकदेशभूतं सत् तदुपरि तथैव तरति यथा समुद्रस्योपरि हिमखण्ड इति। यथा हिमखण्डः समुद्रादेवोपजायते, समुद्रस्यैवोपरि तिष्ठति, समुद्रे एव च प्रविलीयते, तथैव जाग्रच्चैतन्यं खल्ववचेतनादेवोपजायते, अवचेतनस्योपरि तिष्ठति, अवचेतने एव च प्रविलीयते। जाग्रच्चैतन्यं तु यावदवचेतननिमग्नं भवति तावत् स्वप्ना दृश्यन्ते, यावच्च तस्माद् विविक्तं भवति तावदेते तिरोहिताः तिष्ठन्ति। एवं खलु ज्ञायते स्वप्नशीलमवचेतनमेव स्वप्नचैतन्यमिति। स्वप्नचैतन्यस्य निर्माणं तु जीवोत्पत्त्यैव सह प्रारब्धं स्यात्। उत्पत्यनन्तरं जीवो विकासक्रमेण याभ्यो याभ्योऽवस्थाभ्यो निर्गतः, ताभ्यस्ताभ्योऽवस्थाभ्यः संवेदना भावांश्च सङ्गृह्य स्वप्नचैतन्यं संघटितमित्यनुमातुं शक्यते। अतएव खलु स्वप्नचैतन्ये तास्ताः प्रतिमाः ते ते च भावा आविर्भवन्ति येषां विषये जाग्रच्चैतन्यं तु नितरामनभिज्ञं भवति। परवर्तियुगीनत्वात् तदनभिज्ञं जाग्रच्चैतन्यं तु स्वप्नचैतन्यं विशृङ्खलं मन्यते। अपरं च, श्रीअरविन्देन जाग्रत्स्वप्नव्यतिरिक्तमध्यात्मचैतन्याभिधं तृतीयमपि चैतन्यप्रकारमभिमतम्। यथा खलु स्वप्नचैतन्यं स्वप्नावस्थायामवगाह्यते, तथैवाध्यात्मचैतन्यं नाम समाधिप्रभृतिष्वतिमानसीष्ववस्थासु। पुनश्चाध्यात्मचैतन्योपरिष्टात् सर्वातिक्रान्तं नाम चैतन्यं विद्यते यत्तु इतरं त्रिविधमपि चैतन्यं व्याप्नोत्यपि, अतिक्रामत्यपि। परमार्थतस्तु यासु कास्वप्यवस्थासु यः कोऽपि चैतन्यांशो विद्यते, असौ खल्वेतस्मादेव सर्वातिक्रान्ताच्चैतन्यादवतरति। एतस्मिन् प्रविष्टे सति तु चैतन्यत्रयस्यापि वैयर्थ्यं तथैवावबुध्यते यथा जलाशयोपलब्धौ जलपात्रनिहितस्य जलस्य। किं त्वेतावता खलु नानुमेयं चैतन्यत्रयमसद्भूतमिति। वस्तुतस्तु चैतन्यत्रयानुगतेन चैतन्येनाप्यतिमानसमेव चैतन्यमभिव्यज्यते।[१०] एवं सति, स्वप्नचैतन्यस्य मिथ्यात्वजनकत्वमपाकृतं भवति; तेनैव सार्धं मायावाद आत्मनः प्रबलतमाया उपपत्तेर्वियुज्यते।

भ्रमज्ञानस्यापि मायावादनिदर्शनत्वं तावत् तज्ज्ञानप्रक्रियाया अज्ञाने आश्रितमिति श्रीअरविन्दो मन्यते। भ्रमज्ञानं हि द्विपक्षात्मकं भवति। एतयोरेकः पक्ष आधारस्वरूपो

---

१०. तस्मिन्नेव पृ० ५०७-८.

भवति, अपरश्चाधेयस्वरूपः । उभावपि पक्षावन्योन्यनिरपेक्षतया यथार्थौ भवतः । रज्जुसर्पयोर्मध्ये रज्जुरपि यथार्थभूता, सर्पोऽपि । भ्रान्तिस्त्वेषा यत् प्रस्तुता रज्जुरप्रस्तुतसर्पत्वेन दृश्यते । एवमेव मृगमरीचिकायां वायोः कम्पनमेकं तथ्यम्, जलं चापरम् । भ्रान्तिस्त्वेषा यत् प्रस्तुतवायुकम्पनस्थानेऽप्रस्तुतो जलतरङ्गो दृश्यते । एवमेव शुक्तिरेकं वस्तु, रजतखण्डं चापरम् । भ्रान्तिस्त्वेषा यत् प्रस्तुतायाः शुक्तेः स्थानेऽप्रस्तुतो रजतखण्डो दृश्यते । अथ मायावादप्रसङ्गेन जगद्ब्रह्मणोरन्योन्यसम्बन्धमधिकृत्यैतेभ्यो निदर्शनेभ्यः कश्चिन्निष्कर्षो ग्राह्यश्चेत्, असौ तु जगद्ब्रह्मणोरितरेतरसत्तापार्थक्यस्वरूप एव भवितुमर्हति । तथा हि, जगत् खलु रज्जुसर्पवदिति मन्वानेन मायावादिना स्वीकृतं स्याद् यद् रज्जुब्रह्मण्याक्षिप्तं सर्पजगत् तत्त्वतो ब्रह्मव्यतिरिक्तमपरं सत्यमिति । एवमेव जगत् खलु मृगमरीचिकाभूतमिति मन्वानेन मायावादिना स्वीकृतं स्याद् यद् वायु-ब्रह्मण्याक्षिप्तं जलजगत् तत्त्वतो ब्रह्मव्यतिरिक्तमपरं सत्यमिति । परं त्वेवं स्वीकृते सति तदद्वैतत्वमेव बाधितं भविष्यति यन्निमित्तं तावन्मायावाद आविष्कृतः । तैस्तु केवलं ब्रह्मैव सन्मतम्, जगत्तु मिथ्याभूतम् । नन्वेवं सति, ब्रह्माक्षिप्तस्य जगत्प्रत्ययस्य किं मूलम ? एष ब्रह्ममूलश्चेत्, एतानि निदर्शनानि निरर्थकानि भवन्ति । एष ब्रह्मेतर-मूलश्चेत्, मूलतत्त्वस्याद्वैतत्वं बाधितं भवति । एतयोरुभयोरेव विकल्पयोरनपेक्षितत्वात्, एतैर्निदर्शनैरुपपादितो मायावादो जगद्ब्रह्मसम्बन्धविषयेऽप्रयोज्य इति निष्कर्षः । एष तु केवलं तदैव प्रयोज्यो भवितुमर्हति यदाऽस्मद्दृष्टिर्मरुभूमिवायौ, रज्जौ वा किमप्यदृष्टपूर्वं पदार्थं निर्मिमीत ।[11] अथ खलु मायावादी तादृशेऽन्तर्विरोधे निपतति यस्मान्निर्गन्तुं चेदसौ स्वनिदर्शनानि त्यजति, तर्हि निरुदाहरणत्वादात्ममतमुपपादयितुं न शक्नोति; चेदेतान्यङ्गीकरोति, तर्हि तन्मतं खलु भृशं संशोधनमपेक्षते ।

परं च, न केवलं स्वप्नभ्रमज्ञानयोरपितु प्रातिभप्रेरणायां कलात्मककल्पनायां च ते ते पदार्थाः सृज्यन्ते नाम । किं तु, पूर्ववदेतेऽपि मायावादापेक्षितानि निदर्शनान्यर्प-यितुं न शक्नुतः । सर्जनार्थमेताभ्यामुपयुक्तेषूपादानेषु हि किमप्येकान्ततोऽभिनवं न भवति । यत्सत्यम्, तेषु तेषु स्थलेषु विकीर्णाः पदार्थाः पदार्थलवाश्च परस्परं मिलित्वैवैतानि वस्तूनि निर्मीयन्ते । मायाकार्यं तु नैतद्विधम् । एषा तु मौलिकी रचनाशक्तिः । एषा हि निर्माणहेतोर्न कमप्यनुकरोति, नैव किमप्युपादत्ते ।

वस्तुतस्तु मायावादिभिर्मायारुपिण्येतादृशी प्रहेलिकाऽऽविष्कृता या न केवलं मूलभूतायाः समस्यायाः समाधानेऽसमर्थैव, अपितु स्वत एव समस्यान्तररूपेण परिणता । मूलभूता समस्या त्वेषा कथं नाम ब्रह्मणो जगदुत्पद्यते इति । तथा हि, ब्रह्म सत्यम्,

११. तस्मिन्नेव, पृ० ५११.

शाश्वतम्, अनन्तम्, ज्ञानस्वरूपम्, चिन्मयम्, निर्विकारम्, आनन्दरूपमित्युपनिषत्सु तावत् प्रतिपादितम् । जगच्च प्रत्यक्षत एव विनाशशीलम्, असन्मयम्, अज्ञानरूपम्, अचिन्मयम्, सविकारम्, अघमयम्, दुःखप्रधानं च प्रतीयते । ननु किमर्थं कथं चैतादृशं ब्रह्मैतादृग्रूपेणात्मानं परिणणाम ? जगतः कारणं चेत् तन्न स्यात्, कारणान्तरकल्पनादद्वैतत्वं बाधितं भवेत् । स्वशक्त्यैवैतदात्मानं जगद्रूपेण परिणणामेति मतं स्याच्चेत्, तस्य सत्यत्वप्रभृतिधर्मा बाधिता भवेयुः । अनिच्छयैवैतत्सर्वं तत् ससर्जेति मन्येत चेत्, तस्य चिद्घनत्वं प्रतिहतं स्यात् । एवंविधाः समस्याः प्रकारान्तरेण समाधातुमशक्ता मायावादिनः खलु मायानाम्नीमेनां विषमां प्रहेलिकां पुरश्चक्रुर्यया चिन्तने विवशतामयी विश्रान्तिः, क्रियायामकर्मण्यता, भावे च निराशोत्पाद्यते । अतएवैनां श्रीअरविन्दोऽतर्कपुष्टाम्, असम्यङ्निर्दशिताम्, अनपेक्ष्याम्, अनुपादेयां च मन्यते ।

ननु मायावादोद्भावकेषु तथ्येष्वन्यतमं त्विदं यत् कारणभूते ब्रह्मण्यविकार्येऽपि सति कार्यभूतं जगत् सततगतिशीलम्, विकार्यं चास्ति । कथं ह्यपरिणामधर्मिब्रह्म परिणामिजगद्रूपेणात्मानं परिणमते ? "न ह्येकस्य ब्रह्मणः परिणामधर्मत्वम्, तद्रहितत्वं च शक्यं प्रतिपत्तुमि"ति श्रीशङ्कराचार्यः ।[१२] श्रीअरविन्दस्त्वेतस्य परिणामापरिणामविरोधस्य कारणमेनं विश्वासं मन्यते यत् स्थितिशीलेन पदार्थेन गतिशून्येन भवितव्यम्, गतिमता च स्थितिशून्येन । सम्प्रति त्वेष विश्वासो भौतिकसापेक्षतावादेन निराकृतप्रायः । एतेनेदानीं सोपपत्तिप्रदर्शितं यद् गतिस्थिती न केवलं सहस्थायिन्यौ भवितुं शक्नुतः, अपित्वन्योन्यपूरके अपि स्तः । तथा हि, पृथिवी गतिशीलापि सती स्थिरेव प्रतीयते, यावत् सूर्यः स्थिरोऽपि सन् गतिशीलः । ननु भौतिकसापेक्षतावादिनो गतिं सद्भूतां मन्यन्ते स्थितिं तु भ्रमात्मिकाम्, यावन्मायावादिनः स्थितिमेव सद्भूतां मन्यन्ते गतिं चासद्भूताम् । श्रीअरविन्दस्त्वेतयोर्मतयोरन्योन्यनिरसनशीलत्वमांशिकसत्यस्य पूर्णसत्यत्वेन स्वीकरणोद्भवं मन्यते । जडपदार्थेषूपलक्ष्यमाणा स्थितिस्तावदांशिकदृष्ट्या भ्रमात्मिकापि प्रतीयमाना सती परमार्थतः सद्भूतेति मन्तव्या, अन्ततोगत्वा सत एव जडपदार्थस्याप्युत्पद्यमानत्वात् । परं त्वेषा स्थितिर्गतितत्त्वोद्गमभूतापि स्वीकर्तव्या । गतिर्हि स्थितिसापेक्षा । यथा खलु स्थिरं जलाशयं विना जलप्रवाहोऽसम्भाव्यः, तथैव स्थितिं विना गतिः । एवमेवांशतो भ्रमात्मिकापि प्रतीयमाना ब्राह्मी गतिः परमार्थतो ब्रह्माभिन्ना, अथ च सद्भूतेति मन्तव्या, ब्रह्मण्येव तद्भावात्, ब्रह्मणश्चाविर्भूयमानत्वात् । एतावता तु नानुमेयं यद् गतिः स्थितेरनुवर्तिनी, स्थितिविनाशिनी च । यत्सत्यं त्वेते उभे अपि युगपदेव स्थिते स्याताम् । "स्थितिस्तावद् गतिक्रियामात्मनि धारयति, क्रिया

---

१२. ब्रह्मसूत्रभाष्ये, २।१।१४.

च स्थितिं न नाशयति।"[१३] अथान्तर्हितगतिः ब्रह्म गतितत्त्वाभिव्यक्तिद्वारेण जगद्रूपं धारयित्वा किमप्यात्मप्रकृतिविरुद्धं करोतीति तावन्न प्रत्येतव्यम्। परमार्थतस्तु "गतिः, क्रिया, सृष्टिर्वा यत्किञ्चिदपि गत्यात्मकं तत्सर्वमेव ब्रह्म" इति श्रीअरविन्दो मन्यते।[१४]

अपरं मायावादोद्भावकं तथ्यं जगतोऽनेकात्मकत्वं ब्रह्मणश्चैकत्वमिति बोद्धव्यम्। श्रीशङ्कराचार्यस्त्वेनं प्रश्नं सविस्तरं विमृशति। एनमधिकृत्यासौ पूर्वपक्षमेवं समुपकल्पते—

"नन्वनेकात्मकं ब्रह्म। यथा वृक्षोऽनेकशाख एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म। अत एकत्वं नानात्वं चोभयमपि सत्यमेव। यथा वृक्ष इत्येकत्वं, शाखा इति नानात्वम्। यथा च समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम्। यथा च मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वम्। तत्रैकत्वांशेन ज्ञानान्मोक्ष व्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति।[१५]

एतन्मतं त्वसावेतस्मात् कारणादग्राह्यं मन्यते यदुपनिषदि मृत्तिकातद्विकारयोर्मध्ये "मृत्तिकेत्येव सत्यमि"ति श्रुतम्। एनामेव श्रुतिं सतर्कं विमृशन्नसावेवं निर्णयति—

"यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं, यथा च मृगतृष्णिकोदकादीनांमूषरादिभ्योऽनन्यत्वं, दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्।[१६]

श्रीअरविन्दस्त्वेकत्वानेकत्वयोर्मध्ये एतादृशमन्योन्यविरुद्धत्वं न पश्यति। कार्यभूतं जगन्नानात्मकमिति सत्यम्। कारणान्तरस्याभावादेतद् ब्रह्मोत्पन्नं स्यादित्यप्यवितथम्। परं तु ब्रह्मणोऽविभाज्यत्वात् आत्मनश्च नानात्वमयत्वात् जगदसद्भूतं मायामात्रं वा स्यादिति मतं तावत् सामान्यदृष्ट्या समीचीनं प्रतीयमानमपि सद् विशेषदृष्ट्याऽविचारितपूर्वमिव लक्ष्यते। प्रथमं तावदेतन्मतमङ्गीकुर्वता परमतत्त्वस्याद्वैतत्वं विस्मार्यैकत्वमेव सर्वस्वमिव पुरस्क्रियते। एवं कुर्वता तेन त्वनन्तं ब्रह्मैकत्वपरिच्छिन्नं कृत्वा सान्तं क्रियते। यथा खलु गणितशास्त्रीयमनन्तमेकत्वानेकत्वे अतिक्रम्य सर्वं व्याप्नोति, तथैवानन्तेन ब्रह्मणाप्येकत्वानेकत्वातिक्रमणपूर्वकं सर्वातिक्रान्तेन भवितव्यम्। तदानन्त्यात् खल्वेकत्वानेकत्वे तत्समाविष्टे भवेताम्। पुनश्च, नानात्वमयं जगत् कार्यत्वात् कारणस्वरूपं सन्नप्यसदित्युच्येत चेत्, तदपि न तर्कसम्मतम्। चेत् "भाव एव कारणस्य

---

१३. श्रीअरविन्दस्य, दि लाइफ डिवाइन, पृ० ५४४-५.

१४. तस्मिन्नेव, पृ० ५४७.

१५. ब्रह्मसूत्रभाष्ये, २।१।१४.

१६. तस्मिन्नेव, २।१।१४.

कार्यमुपलभ्यते," चेत् "प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते........" चेत् "मृत्तिकाया एव च घट उत्पद्यते, न क्षीरात्", अतएव चेत् 'कारणादनन्यत्वं कार्यस्य"[१७], तर्हि कारणस्य सत्त्वे कार्यस्यापि सत्त्वमनपलाप्यमिति स्वीकर्तव्यम्। विशिष्टात् कारणादेव विशिष्टं कार्यमुपजायते चेत्, कार्यामिधः पदार्थोऽभिव्यक्तं कारणमेवेति निश्चीयते। एवं सति, प्रादुर्भावपूर्वं जगतापि ब्रह्मस्वरूपेण भवितव्यम्। अथ ब्रह्मस्वरूपं जगत् कथमप्यसद् भवितुं नार्हति। प्रादुर्भावमात्रेण कश्चित् पदार्थः सत्त्वादसत्त्वे परिणमेदिति न तर्कसम्मतम्। न खलु प्रादुर्भावो नाम सत्त्वादसत्त्वपरिणामः।

अपरं च, जगन्मायामयमिति स्वीकृते सति ब्रह्मज्ञानमपि मिथ्याभूतं स्यात्। 'अहं ब्रह्मास्मी'ति प्रतीतिस्तु संसारस्थितस्यैव प्राणिनो जायते। चेदसौ प्राणी मायामात्रः, तर्हि तदीयं ब्रह्मज्ञानमप्यसद्भूतमिति मन्तव्यम्।[१८]

पुनश्च, यद् ज्ञानस्य परावरत्वमपि मायावादोपपादकत्वेनोपयुज्यते तदपि न न्यायसम्मतम्। परकोटिकं ज्ञानमपरकोटिकस्य ज्ञानस्योच्छेदकमित्येतत् तथ्यं न केवलं स्वप्नजागरणज्ञानयोर्मध्ये एव दृश्यते, अपितु जाग्रच्चैतन्यलब्धविविधज्ञानकोटिष्वपि। तथा हि, भौतिकविज्ञाने तावदेषा स्थितिर्नित्यश एवोत्पद्यते। अत्र खलु प्रचुरतथ्यनिर्भरे सिद्धान्ते उदिते सति, अल्पतथ्यनिर्भरः सिद्धान्तः परित्यज्यते। परं त्वेतावता भौतिकविज्ञानवित् कथमपि न मन्यते परित्यक्तेन सिद्धान्तेन सह तदुपपादकानि तथ्यान्यप्यसत्कल्पानीति। असौ तु पूर्वतरसिद्धान्तस्य भ्रामकत्वं तत्प्रतिपादकविज्ञानविदो ज्ञानदौर्बल्यजन्यं मन्यते, न तु तथ्यानामसत्त्वजन्यम्। एवमेव सङ्कीर्णचैतन्यवता मनसा प्रकल्पिताः केचिज्जगद्विषयका प्रत्ययाश्चेद् विशुद्धे चैतन्ये उदिते सति सङ्कीर्णा भ्रामकाश्च प्रतीयन्ते, तावता नानुमेयं जगदेव भ्रमस्वरूपम्, मिथ्याभूतं वेति।[१९]

१७. तस्मिन्नेव, पृ० ५५४-५.

१८. तस्मिन्नेव. पृ० ५६३.

———

## एकादशोऽध्यायः

# अज्ञानम्

ननु भवेन्नाम मायावादोऽतर्कपुष्टोऽसम्यङ्निर्दशितश्च, तथाप्यद्वैततत्त्वोपकल्पना-पूर्वकं जगद्वैचित्र्यं व्याख्यातुं मायास्थानीयं किमपि तत्त्वान्तरमपेक्ष्यते एव । जगद्-वैचित्र्यं तु चित्शक्तिकार्यमिति तावत् प्रागेव निर्दिष्टम् । ननु सच्चिदानन्दशक्तिभूता चित्शक्तिः कथं सच्चिदानन्दविरुद्धान् धर्मानुत्पादयतीति त्विदानीमपि व्याख्यानम-पेक्षते । तदर्थं श्रीअरविन्दः 'अज्ञानम्' उपयुनक्ति ।

अज्ञानं नाम चैतन्यविषयकम् । अथ यथा सदानन्दाधिकृताः सर्वाः समस्याः सत्-आनन्दाभ्यां समाधानं प्राप्ताः, तथैव चैतन्याधिकृता समस्या चिद्द्वारेण समाधातव्या भवेत् । अपरं च, यथा खल्वितरसमस्याप्रसङ्गेनावरोहारोहप्रक्रियाऽवलम्बिता तथैवात्रापि भवेत् ।

यत्सत्यम्, स्वरूपचैतन्यमात्रनिविष्टः सच्चिदानन्द एतादृशं जगत् कथमपि नोत्पादयेत् । अथ यथाऽसौ सत्तत्त्वं तिरोधाय जागतिकीं सत्तामुत्पादयति, आनन्दं च तिरोधाय जागतिकमनुभववैचित्र्यम्, तथैव चित्तिरोधानपूर्वकं जागतिकं चैतन्यमुद्-भावयति । अतएवैतस्मिंश्चैतन्ये आत्मोद्भवमपि जगदात्मभिन्नमिव प्रतीयते । आत्म-भिन्नत्वप्रतीतेरुपजायमानत्वात्, सच्चिदानन्दो जगच्चेतरेतराभ्यां स्वतन्त्रे इव लक्ष्येते । अपरं च, ज्ञानस्याद्वैतपरत्वादेतयोरन्यतरमेव सद्भूतं प्रतीयते, अन्यतरं चासद्भूतम् । पुनश्चानेन चित्तिरोधानेन न केवल सच्चिदानन्दस्य जगतश्चेतरेतरसम्बन्ध एवान्यथा-क्रियते, अपितु व्यष्टिगतोऽपि सम्बन्धो विक्रियते । परिणामतः सच्चिदानन्दाभिन्नापि सती व्यष्टिरात्मानं तद्व्यतिरिक्ताम्, जगद्व्यतिरिक्तां च मन्यते । तत्त्वतस्तु सा दिक्कालातीता, गतिस्थित्यतिक्रान्ता, निखिलसत्तात्मिका, अखण्डचैतन्यमयी, अमिश्रिता-नन्दमयी च । परं त्वेतस्मात् तिरोधानादेषाऽऽत्मानं दिक्कालपरिच्छिन्नां मन्यते । फलतोऽहमत्रास्मि, अन्यत्र नास्मि, इतराभ्यो व्यष्टिभ्यो भिन्नोऽस्मि, एतत्कालोऽस्मि, एतत्कालव्यतिरिक्तो नास्मीत्येतादृश्यः प्रतीतय उपजायन्ते । पुनश्चैतेन तिरोधानेन परिगृहीता व्यष्टिरात्मानमात्मसङ्कीर्णमपि मन्यते । अतिमानसचैतन्यस्य, निगूढचैतन्यस्य, अवचेतनमनसः, अचेतनमनसश्च तिरोहितत्वात्, साऽऽत्मानं चेतनमनोमात्रमवबुध्यते ।

अपरं च, चेतनमनसोऽपि सङ्कीर्णत्वात्, काचिद् व्यष्टिरात्मानं शरीरमात्रं मन्यते, काचित् शरीरजीवनयुग्ममात्रम्, काचिच्च शरीरजीवनमनस्त्रितयमात्रम् । व्यष्टिचैतन्यस्यैतन्मात्रं परिच्छिन्नत्वात्, व्यष्टेः विचारजातं सङ्कीर्णं वक्रं च भवति, भावजातं सङ्घर्षदुःखशीलम्, व्यापारजातं चानृजुर्वैफल्यप्रायं च ।

एष चैतन्यपच्छेद एवाज्ञानमिति श्रीअरविन्दो मन्यते । सच्चिदानन्द-समष्टि-व्यष्टीनामन्योन्यसम्बन्धवैविध्यात्, एतदज्ञानं खलु सप्तविधं मतम् । सच्चिदानन्दानभिज्ञानपूर्वकं सत्तांशमात्रस्य प्रक्रियांशमात्रस्य वाऽऽत्यन्तिकतत्त्वरूपेण ग्रहणं "मौलिका"-भिधं प्रथममज्ञानम् । दिक्कालातीत-निर्विकार-शाश्वत-ब्रह्माज्ञानपूर्वकं वैश्वदिक्कालसंसरणस्यैव सत्तासर्वस्वेन ग्रहणं "वैश्वा"भिधं द्वितीयमज्ञानम् । वैश्वात्मनो वैश्वसत्ताया वैश्वचैतन्यस्य चाज्ञानपूर्वकमहंकारमनोजीवनशरीरसङ्घातमात्रस्यैव स्वत्वसर्वस्वेन ग्रहणम् "आहंकारिका"भिधं तृतीयमज्ञानम् । आत्मीयमनन्तकालव्याप्तं शाश्वतं परिणाममनभिज्ञायातितुच्छदिक्कालावच्छिन्नस्यात्मजीवनस्यात्मास्तित्वसर्वस्वेन ग्रहणं "कालिका"भिधं चतुर्थमज्ञानम् । चेतनमनोव्यतिरिक्तस्य निखिलस्याध्यात्मसंस्थानस्य विस्मरणं "मनोवैज्ञानिका"भिधं पञ्चममज्ञानम् । आत्मास्तित्वस्य यथार्थं सर्जनरहस्यमनवगम्य शरीरजीवनयोः शरीरजीवनमनसां वा सङ्घातस्य व्यष्टिसर्वस्वेन ग्रहणं "सङ्घटनात्मका"भिधं षष्ठमज्ञानम् । उपर्युक्तषड्विधचैतन्यव्यवच्छेदोद्भवं जीवनविध्यनुगतं चैतन्यविकारमसौ "व्यावहारिका"भिधं सप्तमज्ञानम् मन्यते ।[1]

'अज्ञान' इति पदस्य व्युत्पत्तिलभ्यमर्थं परामृशन्तः केचित् तावदज्ञानं नाम ज्ञानाभावमिति निर्णेतुं शक्नुवन्ति । ननु भवेत् तावदेतादृशोऽर्थः तेषु दर्शनसम्प्रदायेषु येषु ज्ञानं नाम कश्चिदागन्तुको धर्म इति मतम् । तत्र त्वागन्तुकधर्मस्वरूपत्वादेषोऽभावमपि प्राप्तुमर्हति । एष ज्ञानाभावश्च तथैव पदार्थान्तर इव प्रत्येष्यते यथा ज्योतिरभावः तमो नाम पदार्थान्तर इव प्रतीयते । श्रीअरविन्दमतेन तु, चिन्मयत्वात्, ज्ञानस्याभाव एव न सम्भाव्यते; अथ ज्ञानाभावस्वरूपमज्ञानमपि नोत्पत्तुं शक्नोति । एवं सत्यपि तदुत्पद्यते चेत्, तर्हि तेन तावद् ज्ञानाभावस्वरूपेण न भवितव्यम् ।

नन्वज्ञानं चेन्न ज्ञानाभावस्वरूपम्, तर्हि किं ज्ञानस्यैव पक्षविशेषम् ? एवं स्वीकृते सति तु चैतन्यस्वरूपेण ज्ञानेनैव सह तस्यापि सद्भावः सच्चिदानन्दे एव स्यात् । श्रीअरविन्दस्त्वज्ञानं सच्चिदानन्दीयतपोध्यानमूलं मन्यते । यथा खलु कश्चित् तपस्वी सर्वभावेनात्मानं विजानन्नपि तपोध्यानक्रमेण चैतन्यबिन्दुविशेषव्यतिरिक्तं निखिल-

१. दि लाइफ़ डिवाइन, पृ० ७८०—१.

मप्य त्मानं कालविशेषपर्यन्तं विस्मरति तथा च ध्यानोद्भवं विशिष्टमानन्दं प्राप्नोति, तथैव सिसृक्षुः सच्चिदानन्दोऽप्यात्मानं तपोध्याने निमज्जयति।[2] एतस्मान्निमज्जन-व्यापारात् तु तस्मिन् तात्त्विक-सम्पूर्ण-समग्रनानात्मकांशनानात्मकभेदभिन्ना अवस्था उपजायन्ते। चिन्मयाचिन्मयभेदात् तात्त्विकं तपोध्यानं तु द्विविधम्। चिन्मयतपोध्यान-निलीनं ब्रह्माख्यं परमतत्त्वं तु प्रत्ययातीतम्। अचिन्मयतपोध्याननिलीनः सच्चिदानन्दस्तु जड इव वर्तते। सम्पूर्णं तपोध्यानं तु सच्चिदानन्दीयं चिद् भवति। एकत्वानेकत्वे तावदत्र संतिष्ठेते। अतिमानसं चैतन्यं त्वेतत्तपोध्यानावगतिसाधनम्। समग्रनानात्मके तपोध्याने तु व्यष्टिसमष्टी अन्योन्यविविक्ते अपि भूत्वाऽन्योन्यविरुद्धे भवतः। अधि-मानसं चैतन्यं त्वेतत्तपोध्यानावगतिद्वारम्। एतत्तपोध्यानोपजातः परमतत्त्व-समष्टि-व्यष्टिविभेद एवाज्ञानबीजनिधानं मन्यते।[3] अतः परं त्वंशनानात्मकं तपोध्यानं भवति यस्मिन् समष्टेस्तिरोहितत्वाद् व्यष्टिरेव प्रमुखतां व्रजति। एतद्ध्यानोपजाता व्यष्टिः खल्वात्मानं समष्टिकेन्द्रभूतामिव मन्यते। एतदवस्थं तपोध्यानं चाज्ञानमयं भवति।[4] मनस्त्वेतदाश्रयभूतम्।

अथैतावता निश्चीयते यदज्ञानं तावन्मन आश्रित्य प्रवर्तते। अचिन्मयतात्त्विक-तपोध्याननिलयभूते जडतत्त्वे त्वज्ञानस्यासद्भावः। जीवनतत्त्वे चैतन्यस्य संवेदनमात्र-स्वरूपत्वादज्ञानमस्फुटं भवति। अतिमानसीष्ववस्थासु तु ज्ञानप्राबल्यादज्ञानं क्षीणप्रायं भवति। तथा ह्यतिमानसचैतन्ये त्वेतन्निश्शेषं भवति। अधिमानसचैतन्यस्य नानात्वो-न्मुखीभावात्, तस्मिंस्तावदज्ञानं प्ररोहोन्मुखं भवति। अथान्तर्ज्ञानं किञ्चिदज्ञानमिश्रितं भवति। प्रकाशमानमनसि त्वज्ञानस्यैषा मात्रा प्रबलतरा भवति। उच्चतरमनसि त्वेषा ततोऽप्याधिक्यं व्रजति। किं त्वेवं सत्यप्येतास्ववस्थासु ज्ञानमेव प्रबलतरं भवति, एता-सामवस्थानामत्ररोहोन्मुखचैतन्यप्रकाशितत्वात्। आरोहावरोहप्रवृत्तचैतन्योपजायमानत्वा-न्मनस्तावद् ज्ञानाज्ञानमिश्रणभूमिर्भवति। तत्राप्येतत् प्रामुख्येनारोहव्यापारोपजातं मन्यते। अवरोहोन्मुखं चैतन्यं त्वेतस्मिन्नतिक्षीणमात्रायां निपतति, तदपि परोक्षेणैव, तथैव यथा रात्रौ चन्द्रमाध्यस्थ्येन सौरज्योतिः। परं तु यथा चान्द्रज्योतिः कियन्मात्रमपि विततं भूत्वा रात्रिं दिनरूपेण परिणमयितुं न शक्नोति, तथैव मनः कियन्मात्रमपि ज्ञानानुप्रविष्टं भूत्वा स्वमज्ञानमयत्वं हातुं न शक्नोति।

---

२. तस्मिन्नेव, पृ० ४७८.

३. तस्मिन्नेव पृ० ३३३—४.

४. तस्मिन्नेव, पृ० ६१०—२.

मनसोऽज्ञानमयत्वं तु विभाजनपरत्वेन प्रतिफलति । विभाजनव्यापारस्तु दिक्कालविभक्तिपूर्वकं प्रवर्तते । दिक्कालौ च तत्त्वतोऽविच्छिन्नस्वरूपौ । एतयोर्विच्छेदो नाम मनोजन्यः । ज्ञानेन्द्रियद्वारेण यं कालं मनः साक्षादवगच्छति तं वर्तमान इत्यभिधत्ते, यमात्मनिहितस्मृतिमाध्यस्थ्येनावबुध्यति तं भूत इति, यं त्वेतद्व्यतिरिक्तभावेनानुमीयते त भविष्यदिति । अल्पशक्तिमत्त्वात्, मनसा तावत् स्तोकमेव कालांशं युगपदवबुध्यते । अतएव कालः क्षणादिभेदभिन्नो भवति । एतस्मात् कालविभेदाच्च जगतः सातत्यं विभक्तं भवति । मनसोऽल्पशक्तिमत्त्वमेव दिग्भेदस्यापि कारणम् । यो दिगंशो यावन्मात्रायासपूर्वकं मनसा ज्ञायते, तावन्मात्रमसौ दूरस्थो मन्यते । चेन्मनो ज्ञानप्रबलमभविष्यत्, तर्हि दूरत्व-समीपत्वजन्यं दिग्विभाजनं नाभविष्यत् । दिग्विभाजनस्य चासद्भावे पदार्थानामन्योन्यविभाजनमपि न स्यात् ।[५] अनेन प्रकारेण, मानसज्ञानदौर्बल्याद् दिक्कालयोरसम्यगवगतिर्भवति । एतस्मादवगत्यसम्यक्त्वाच्च दिक्कालाभ्यां भिद्यमानं जगत् प्रतिपदार्थविभाजनसङ्कीर्णं प्रतीयते । एषाऽवबोधसङ्कीर्णतैवाज्ञानमिति श्रीअरविन्दो मन्यते ।[६]

अज्ञानस्य प्रयोजनं त्वेतद्विधसृष्टेरुत्पादनमित्यसावुपपादयति । अनन्तस्वरूपत्वात् सच्चिदानन्दः खल्वनन्तसम्भावनाभूमिः । एतत्सम्भावनाप्राकट्यसाधनभूता चित्शक्तिरप्यनन्तैव । अथ कारणद्वयस्यानन्त्यात्, कार्यमप्यनन्तस्वरूपं स्यात् । एतादृश्याऽनन्तस्वरूपया सृष्ट्या दिक्कालाभ्यामनवच्छिन्नया भवितव्यम् । ननु स्यान्नाम काचिदेतद्विधाऽपि सृष्टिः ; अस्माकीना तु नैतादृशी । एषा हि दिक्कालाभ्यामवच्छिन्नत्वात् सान्ता । अथ सान्तायाः सृष्टेः प्राकट्यार्थं कारणद्वयस्य परिच्छेदनमपेक्ष्यते । अज्ञानं त्वेतस्य परिच्छेदनव्यापारस्य साधनत्वेनोपयोजितम् । तथा हि, कस्मिंश्चित् क्षणेऽनन्तसम्भावनाभूमिभूते सच्चिदानन्देऽनन्तप्रेरणाशक्तिस्वरूपया चित्शक्त्या प्रेर्यमाणे सति अनन्तसङ्ख्याकाः सम्भावनाः प्राकट्यार्थं सन्नद्धा भवितुं शक्नुवन्ति । अतिमानसेन त्वेतस्मात् सम्भावनासमुच्चयात् ता एव सम्भावना आविर्भवितुमनुमन्यन्ते याः सृष्टिप्रयोजनानुरूपा भवन्ति । शेषास्तु तिरोधीयन्ते । अज्ञानं नामैतस्यानपेक्षितसम्भावनासमुच्चस्य तिरोधानसाधनम् ।[७] अथानन्तस्य सान्तत्वपरिणामसाधनत्वात्, व्यष्टिभ्यः समष्टिनिरसनशीलत्वाच्चाज्ञानं खलु "चित्शक्तेर्महत्शक्तिभूतम्" इत्युक्तम् । सृष्ट्यर्थमेतत् तावत् तथैवानुपेक्षणीयं यथा कार्य-

---

५. तस्मिन्नेव, पृ० ६०१.

६ तस्मिन्नेव, पृ० ६६३—४.

७. तस्मिन्नेव, पृ० ६६२.

विशेषसम्पादनार्थमवधानानुषक्तमनवधानम् ।[८]

नन्वज्ञानविषयकं श्रीअरविन्दीयं मतमेतद्विषयकेण शाङ्करमतेन सह सामञ्जस्या-सामञ्जस्यविवेकमपेक्षते । श्रीशङ्कराचार्यस्त्वज्ञानमविद्यास्वरूपं मन्यते । तदभिमता-ऽविद्या त्वसद्विषया, अथ च मायात्मिका । सैवासद्भूतस्य जगतः कारणम्, तथैव यथा "अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति ।"[९] नन्वध्यासभूतेयमविद्या कुत उत्पन्ना ? ब्रह्मणस्तु सा नोत्पद्येत । न हि शाश्वतज्योतिस्स्वरूपं ब्रह्म कथमपि तमस्स्व-रूपाविद्याया आश्रयो भवितुमर्हति । परं च सा ब्रह्मव्यतिरिक्तापि भवितुं न शक्नोति, तत्त्वान्तरस्यासद्भावात् । एवंभूता सा रज्जुसर्पवत् निराश्रया, अनिर्वचनीया, सत्तत्त्वा-वगतिमात्रपर्यवसायिनी च मन्तव्या । अनेन प्रकारेणासावज्ञानं जगत्प्रतीतिकारणभूतमाया-ऽभिन्नं मन्यते । एतस्मादभेदात्तु सृष्टिरज्ञानमयत्वमथ चासत्त्वं व्रजति । श्रीअरविन्दस्तु सृष्टिव्यापारं चित्शक्तौ निवेश्य, तद्व्यापारनियामकत्वेनाज्ञानं प्रस्तूय चैते उभे अपि तत्त्वे अन्योन्याभ्यामेवं विविनक्ति यथा सृष्टेरसत्त्वप्रसङ्गः परिवर्ज्यते । अपरं च, यावत् श्रीशङ्कराचार्योऽज्ञानमनादिम्, सृष्टिसमवायिनं च मन्यते तावत् श्रीअरविन्द एतस्या-नुषङ्गोद्भूत्युपपादनपूर्वकमतिमानसचैतन्यविनाश्यत्वं निर्दिशति । अतएव यावत् श्रीशङ्कराचार्याभिमता व्यष्टिः समष्टिपरित्यागपूर्वकमेव परमतत्त्वेन सहैकत्वमवाप्तु-मर्हति, तावत् श्रीअरविन्दाभिमता साऽतिमानसं चैतन्यमवतार्य तद्द्वारेणाज्ञानं विनाश्य च निखिलां समष्टिमेव परमतत्त्वमयीं कर्तुं शक्नोति । पुनश्च, शाङ्करमते तावदज्ञानस्य मायास्वरूपत्वात्, सर्वा व्यष्टयो "नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे परमात्मनि" व्योम्नि तलमलादिवत् परिकल्पिताः ।[१०] अथ ज्ञानेनात्मन उन्मुच्य ताः पूर्वभावमात्रं गन्तुमर्हन्ति । श्रीअरविन्दमते त्वज्ञानस्य व्यष्ट्याविष्करणपरिपोषणनिमित्त-प्रयोजितत्वात्, तद्द्वारेण व्यष्टयो न केवलं समष्टिमुत्थापयन्ति, अपित्वात्मभावमपि परिपूरयन्ति । अनेन प्रकारेण, यावदज्ञानविषयकं शाङ्करमतं व्यष्टि-समष्टिनिराकरण-परम्, परमतत्त्वमात्रोपपादकं चास्ति, तावत् श्रीअरविन्दमतं परमतत्त्वावतारणपूर्वकं व्यष्टिसमष्ट्योः परिपूरकमस्ति ।

एतस्मिन् विषये श्रीअभिनवगुप्तस्तावत् श्रीअरविन्दप्रतिवेशीव प्रतीयते । असावपि मन्यते यद् "अज्ञानमिति न ज्ञानाभावः" । एवं सति त्वज्ञानमयं लोष्टादिकमपि

---

८. तस्मिन्नेव, पृ० ४७८.

९. श्रीशङ्कराचार्यस्य, ब्रह्मसूत्रभाष्ये, उपोद्घाते, पृ० २.

१०. तस्मिन्नेव, १।३।१९.

संसरेदिति तत्तर्कः। अतो "ज्ञेयस्य तत्त्वस्य सामस्त्येनाप्रथात्मकं ज्ञानमेव ...... अज्ञानमिति" शिवसूत्रमुखेनासौ स्वं मतं प्रतिपादयति। अज्ञानं तु "द्वैतप्रथा"—स्वरूपमित्यसौ मन्यते। एतस्मात् स्पष्टं प्रतीयते यत् तन्मते सङ्कोचापन्नं ज्ञानमेवाज्ञानाभिधमिति। ज्ञानस्य सङ्कोचस्तु व्यष्टिं समष्टेः पृथक्करोति, व्यष्टिसमष्टी च परमतत्त्वात्।[11] एतदेव ज्ञानसङ्कोचस्वरूपमज्ञानं प्रत्यभिज्ञाशास्त्रे मायीयमलमित्यभिहितम्।[12] परं त्वेतत्पर्यन्तमागत्यापि श्रीअभिनवगुप्तः तदनुयायिनश्चैतस्य ज्ञानसङ्कोचस्वरूपाज्ञानस्य प्रतीयमानमात्रत्वं प्रतिपाद्य तदुद्भूतव्यष्टिसमष्ट्योरसत्त्वमुपपादितवन्तः। एवं कुर्वन्तः तेऽप्यज्ञानोपजातव्यष्टिसमष्ट्योः सत्त्वोपपादकश्रीअरबिन्दात् पूर्वतरमेव विरमन्ति।

---

११, श्रीअभिनवगुप्तस्य, श्रीतन्त्रालोके, प्रथमे भागे, श्लो० २५, २६, ३०,

१२, श्रीक्षेमराजस्य, प्रत्यभिज्ञाहृदये, सू० ९,

द्वादशोऽध्यायः

# पूर्णज्ञानम्

बुद्ध्योपार्जितं व्यवहारक्षमं ज्ञानमेव ज्ञानसर्वस्वमिति तावदद्यतनं सर्वप्रचलितं ज्ञानविषयकं मतम् । बुद्धिस्वरूपस्य तद्व्यापारविधेश्च विमर्शादेतन्मतस्य भ्रामकत्वं ज्ञायते । बुद्धिर्नामान्तःकरणचतुष्टयगतं निर्णायकं करणम् । बाह्यजगत्सम्पृक्तैरिन्द्रियैर्या याः संवेदना मनसि निधीयन्ते तास्ताः सङ्कल्पविकल्पपूर्वकं मनो निर्णयार्थं बुद्ध्यै समर्पयति । बुद्धिस्त्वनया रीत्या सङ्गृहीतान् तथ्यलवान् संयोजयति परामृशति च । एतदर्थं सा तावदेकतः पूर्वतरसंवेदनद्वारेणोपार्जितं स्मृतिरूपेण विद्यमानं विशिष्टं ज्ञानमुपयोजयति, अन्यतश्चात्मिकं सामान्यं ज्ञानम् । यत्सत्यम्, एतयोरुभयविधज्ञानयोर्नैकमपि बुद्धिजन्यं भवति । तथा हि, यावत् स्मृतिरूपं ज्ञानमिन्द्रियोपार्जितं भवति तावदात्मिकं ज्ञानं बुद्धिव्यापारात् प्राक्तनम् । सा त्वेते उभयविधे अपि ज्ञाने केवलं परस्परं संयोजयति । एतस्मान्निश्चीयते यत् सा परोक्षेणैव सत्तया सह सम्पृक्तेति । नन्वेतादृग्बुद्ध्योपार्जितं व्यवहितं ज्ञानं कथं नाम ज्ञानसर्वस्वं भवितुमर्हति ?

एतादृशो ज्ञानस्य व्यवहारक्षमत्वे तावन्नास्ति कश्चित् सन्देहः । निखिलं ह्यद्यतनं भौतिकं विज्ञानं बुद्धिव्यापारजम् । किं त्वेतावन्मात्रेण नानुमेयं सर्वमेव बौद्धिकं ज्ञानं प्रामाणिकम्, यथार्थं वेति । अनुदिनं हि श्रूयते बुद्ध्याविष्कृतसिद्धान्तां परिमार्जनचर्चा परित्यागसमाचारो वा । एतत्तु न केवलं भौतिकविज्ञानमेवाधिकृत्य चरितार्थं भवति, अपितु तत्त्वज्ञानमपि । बुद्धिपरा दर्शनविदो हि मूलतत्त्वमप्यधिकृत्यान्योन्यविरुद्धानि मतानि प्रतिपादयन्तो दृश्यन्ते । तथा हि, जगत् सदिति केचिन्मन्यन्ते, असदिति केचित्, उभयात्मकमिति चापरे । जगतः कारणमेकमिति केचिद् वदन्ति, अनेकमिति च केचित् । विषयमात्रं सदिति केचिदुद्घोषयन्ति, विषयिमात्रमिति केचित्, उभयभिन्नमिति च केचित् । नन्वेतानि सर्वाण्येवान्योन्यविरुद्धानि मतानि सत्यभूतानीत्युपपाद्यमाना बुद्धिः कथं नाम ज्ञानसर्वस्ववाहिका भवितुमर्हति ?

अथ ज्ञानसर्वस्वार्थं बुद्धिव्यतिरिक्तं साधनान्तरमनुसन्धेयम्, अवलम्बनीयं च । ननु कीदृशं तद् भवितुमर्हति, कुतश्च लभ्यम् ? श्रीअरविन्दाभितो जगन्मूलकारणभूतः सच्चिदानन्दो यावदेकस्मिन्पक्षे सत्स्वरूपोऽस्ति तावत् पक्षान्तरे चित्स्वरूपः । एतस्मात्

कारणाद् यत्र यत्र सदस्ति तत्र तत्र चिदपि स्यात्। सत् तु जगद्रूपेणावरुह्य विविध-कोटिकसत्तास्वरूपं धत्ते। अथ चिदपि तादृशमेव भवितव्यम्। एवं सति चेत् कस्याञ्चि-न्मानवव्यष्टौ शरीर-प्राण-मनःप्रभृतीनि तत्त्वान्युपनिबद्धानि, तर्हि तस्यां तत्तत्तत्त्वानुगतं तत्तत्प्रकारकं चित्तत्त्वमप्यनुस्यूतं स्यात्। एनां सम्भावनामुत्प्रेक्ष्यान्वेषणपरः श्रीअरविन्दो मानवाध्यात्मसंस्था विविधसोपानीयेति प्राप्नोति। तदनुसारमेतस्याः संस्थाया निम्नतमो विभागोऽचेनाभिधोऽस्ति। अचेतनं खलु दैहिकं चैतन्यम्। अवरोहक्रमेण तिरोभूतं चित् आरोहक्रमेण जडतत्त्वादाविर्भूयमानं सत् प्रथमे कल्पे ऽचेतनाभिधं भवति। सुषुप्तिस्त्वे-तत्प्रवेशद्वारम्। आत्मज्ञानक्रमे एतत् त्वनुपेक्षणीयम्। सुषुप्तिगतं चैतन्यं हि जागरणा-नन्तरमात्मानं नवीभूतमिव मन्यते। यथा कश्चित्पादपो भूमे रसमाकृष्यात्मानं पुष्णाति, तथैवाचेतनाच्चिद्रसं गृहीत्वा चेतनं मन आत्मानं सम्बलयितुमर्हति। अपरं च, दैहिकीः क्रियास्तावदचेतनद्वारेणैव प्रत्यक्षीकर्तुं शक्यन्ते। अथ मनसः पोषणार्थं शरीरस्य च प्रत्यक्षावगत्यर्थमचेतनं नाम सम्यगनुसन्धेयम्।

अचेतनोपर्यवचेतनाभिधोऽध्यात्मविभागो विद्यते। अवचेतनं तु द्विविधम्। एतयोरेकविधं तावदचेतनोद्भवम्, शेष च चेतनमनोजन्याभिः तृप्त्यनर्हत्वादधस्ता-न्निक्षिप्ताभिर्वासनाभिः सङ्घटितम्। वासनाजन्यमवचेतनं तु वैयक्तिकं भवति। एतद् हि वर्तमानव्यष्टिजीवनोद्भवम्। अचेतनोद्भवमवचेतनं तु निर्वैयक्तिकं भवति। यदा जडतत्त्वं प्राणसंवलितं जातं तदा संवेदनानां संस्कारजातं व्यष्टिनिर्विशेषत्वेन संयुज्यैतद-वचेतनं निर्ममे। अथावचेतनं नाम प्राणकोटिकं चैतन्यम्। अस्मिन् खलु समग्रमपि प्राणिविकासैतिह्यमनुसन्धातुं शक्यते। एतदेवाश्रित्य शिशुः प्राणिविकासक्रममनुकरोति, पशवश्च मूलप्रवृत्तिलक्षणं क्लिष्टातिक्लिष्टं कार्यं निर्वर्तयन्ति। अज्ञातभावेनैतत् खल्व-स्माकीनमपि जीवनं सुतरां प्रभावयति। तथा ह्येतेनास्माकीनाः सुखदुःखावस्था भृशं नियम्यन्ते, क्रियाः कार्यन्ते, समस्याश्च निर्णीयन्ते। एतत् खलु मनश्शक्तिस्रोतोभूतम्। अथैतस्मान्नयने निमील्य कश्चिज्जनः कदापि ज्ञानस्य पूर्णत्वमारोढुं न शक्नोति।

अवचेतनस्योर्ध्वं चेतनमनो नामापरोऽध्यात्मसंस्थाविभागो विद्यते। एतत् तु सङ्कल्पविकल्पात्मकं सत् मन इति कथ्यते, निर्णायकं सत् बुद्धिरिति, चितिक्रियां च कुर्वत् चित्तमिति। एतस्य केन्द्रं त्वहंकाराख्यम्। चतुर्विधमपि चेतनमनः तावत्पर्यन्तमेव स्वतः सम्पूर्णमिव प्रतीयते यावच्चैतन्यसङ्घातस्योपर्युपरि परिवर्त्यते। अध्यात्मनो गभीरेषु सोपानेष्ववतरणपूर्वकं दृष्टं त्वेतद् भिन्नप्रकारकमेव लक्ष्यते। तत्र त्वेतदेकतो-ऽचेतनावचेतनाभ्यामुपजायमानमिव प्रतीयते, अपरतश्चान्यस्माच्चैतन्यपुञ्जात् कानिचित् तत्त्वानि गृह्णन्निवावबुध्यते।

मानसचैतन्यस्यापरस्रोतोभूतोऽयं चैतन्यपुञ्जो निगूढचेतनामिधः। जडजीवनमनस्तत्त्वद्वारेणारोहोन्मुखस्य चैतन्यस्योत्थापनार्थमवरुह्यमाणमतिमानसं चैतन्यं खल्वारोहलक्षणेन चैतन्येन सह यस्मिश्चैतन्यसंस्थाने मिलति तत् श्रीअरविन्देन निगूढचेतन इति प्रथितम्।[1] अन्तश्चेतन-परिचेतनभेदेन निगूढचेतनस्तु द्विविधः। परिचेतनो नाम निर्वैयक्तिकः। एतस्मिंस्तु निखिलमेव जगद् हस्तामलकवत् प्रत्यक्षं ज्ञायते। लोकान्तरमप्येतस्मिन् प्रतिफलति। एष खलु समुद्रवत् सर्वव्यापकः। निगूढचेतनस्य वैयक्तिकं केन्द्रं तावदन्तश्चेतनाभिधम्। सच्चिदानन्दस्तु वैयक्तिकत्वेनाध्यात्मानं जगति परिणमयति निर्वैयक्तिकत्वेनापि। तस्य वैयक्तिकं स्वरूपं तावदज्ञानलक्षणेनारोहक्रमेण विकसति, निर्वैयक्तिकं स्वरूपं च चैतन्यावरोहक्रमेणोपरिष्टादवतरति। अज्ञानलक्षणे मनसि तु विशेषाणामवगतिः स्वभावतो भवति, यावत् सामान्यानामवगतिरुपरिष्टात् प्रतिफलति। किं त्वारोहावरोहलक्षणचैतन्यद्वयसम्मेलनभूमिभूते निगूढचेतने सामान्यविशेषौ तावदितरेतरसमन्वितौ भवतः। एतस्मात् समन्वयादेव निगूढचेतनो यावदेकतः परिचेतनो भवति तावदन्यतोऽन्तश्चेतनः। अन्तश्चेतनस्तु निरहंकारो भवति। एतस्मिन् खलु स्व-परविभेदो निराकृतो भवति। अतएव निगूढचेतनप्रविष्टो जन आत्मानं जगन्मयं पश्यति, जगच्चात्ममयम्।

परं तु निगूढचेतनोऽपि चैतन्यप्रकाशस्य मूलस्रोतो नास्ति। एतन्निष्ठो हि योऽप्येतस्मादप्यूर्ध्वतरदेशादाविर्भूयमाणं चैतन्यज्योतिः पश्यति। एतच्चरममध्यात्मसोपानं स्वतिचेतनाभिधम्। एष खलु सूर्यवत् सर्वविधचैतन्यज्योतिष उद्गमः। अथ निगूढचेतनावचेतनौ समुद्रेण प्रतीकायितुं शक्येते चेत्, तर्ह्यतिचेतन आकाशेन। "चेन्निगूढचेतनावचेतनौ मनोव्यापारतरङ्गोत्पादकसमुद्रवदधिगन्तुं शक्यौ, तर्ह्यतिचेतन आकाशवत्—य आकाशः सोर्मिमालस्य समुद्रस्य निर्माता, आश्रयः, आवरणः, व्यापकः, नियन्ता चास्ति।"[2]

अथैतावता ज्ञायतेऽस्मदध्यात्मसंस्था कियद्विस्तृतेति। मनोबुद्धिचित्ताहंकारलक्षणेऽन्तःकरणे प्रतिभासितं चैतन्यं तु सम्पूर्णाध्यात्मचैतन्यस्योपरितनस्पन्दनमात्रं प्रतीयते। यथा खलूर्मिजालमात्रगणनान्निखिलः समुद्रो न ज्ञायते, तथैवान्तःकरणमात्रावलम्बनात् तत्त्वजातमवबोद्धुं न शक्यते। अथ चेत् तत्त्वजातं ज्ञातव्यम्, तर्हि सम्पूर्णमप्यध्यात्मसंस्थानं तथैवोपयोजनीयं यथा समुद्रस्य सम्यग्ज्ञानार्थं तदीयं गभीरं जलं तलपर्यन्तमवगाह्यते।

एतस्मिन् प्रसङ्गे ज्ञानस्य द्वैविध्यमप्यवधेयम्। प्रथमप्रकारकं ज्ञानं तावदुक्त-

---

१. दि लाइफ डिवाइन, पृ० ६५४.

२. तस्मिन्नेव, पृ० ६६८.

रीत्या व्यवहितं भवति। एतद् ह्यन्तर्बहिःकरणद्वयसाधनम्। ज्ञानेन्द्रियैर्गृहीतम्, मनोबुद्धि-चित्ताहंकारैश्च सङ्कल्प-निर्णय-चितिपूर्वकं स्वीकृतं ज्ञानमेतादृशं भवति। व्यवहितत्वात्, करणानां परिमितशक्तिमत्त्वाच्चैतद्विधं ज्ञानं ज्ञेयस्य प्रतीयमानमेव स्वरूपं ज्ञापयति। द्वितीयप्रकारकं ज्ञानं त्वव्यवहितं भवति। यावद् व्यवहितं ज्ञानं ज्ञेयस्य तटस्थलक्षणमात्रं बोधयति, तावदव्यवहितं ज्ञानं तत्स्वरूपमेवावगमयति। अथ ज्ञेयस्वरूपावगत्यर्थं जिज्ञासुना खलु सर्वविधभेदबुद्धिनिरसनपूर्वकं तथैव तद्रूपेण भवितव्यं यथा क्रोधस्वरूपावगत्यर्थं मनसा तावदितरव्यापारपरित्यागपूर्वकं क्रुद्धेन भूयते। अथ ज्ञेयजातस्याव्यवहितस्वरूप-ज्ञानार्थं जिज्ञासुना तत्तत्पदार्थसोपानीयमध्यात्मचैतन्यं प्रवेष्टव्यं नाम।

एवं द्वे अध्यात्मसोपाने चेतनमनसोऽधस्ताद् विद्येते, द्वे चोपरिष्टात्। ननु मनोनिरोधपूर्वकं प्रथमं तावदधस्तात् प्रवेष्टव्यमुपरिष्टाद्वा ? श्रीअरविन्दस्तु प्रथमे कल्पेऽधोगमनाद् वारयति। तन्मतेन, अवचेतनाचेतनप्रवेशः खलु गभीरस्वप्न-सुषुप्ति-प्रमोह-विक्षेपप्रभृतिष्ववस्थास्वेव सम्भाव्यते। एता अवस्थाश्चाज्ञानात्मिकाः। एतद-वलम्बनादारोहव्यापारोपार्जितमपि चैतन्यमपहीयते। अतएव साम्प्रतिकमनोविश्लेषण-वादविरुद्धं श्रीअरविन्द उपर्यारोहणमेव चैतन्यविस्तारद्वारं मन्यते।

निगूढचेतनातिचेतनप्रवेशस्य सुप्रसिद्धो मार्गः समाधिरिति सुचिरकालात् सुप्रष्ठितं मतम्। समाधिमार्गः चिरप्रतिष्ठतः, उपादेयश्च सन्नप्यपूर्ण इति तु श्रीअरविन्दो मन्यते। समाधौ हीतरेषामध्यात्मसोपानानामपसारणपूर्वकं निगूढचेतनातिचेतनौ प्रविश्येते, प्रत्यक्षमवगम्येते चेत्यत्र नास्ति काचिद् विप्रतिपत्तिर्नाम। परं तु व्युत्थानान-न्तरमेव चैतन्यं तावच्चेतनावचेतनव्यापारैरभिभूयते। परिणामतः समाध्यर्जितं ज्ञानं व्युत्थानकाले प्रत्यक्षत्वं विहाय संस्कारावशेषमात्रं भवति। एतद्विधं ज्ञानं तु चेतन-प्रवृत्तीरप्युत्थापयितुं न शक्नोति, किं पुनरवचेतनप्रवृत्तीः। अथ समाधिव्युत्थितो जनो दुर्विचारः, कुप्रवृत्तिः, विमूढश्चापि भवितुमर्हति। एतत् खलु न पूर्णज्ञानवत्त्वम्। न हि तत् कदाचित् पूर्णज्ञानाभिधानं लब्धुमर्हति यस्मिन्नशेषाध्यात्मसोपानवर्गः परस्परं न समन्वितः। समाधिजन्यं ज्ञानं तु चौरवर्तिकाप्रकाशवद् दूरंगामी सन्नप्यज्ञानान्धकार-परिच्छिन्नं भवति, अनस्थिरं च। पूर्णज्ञानेन तु सौरप्रकाशवन्निराकृतनिखिलाज्ञानति-मिरेण, स्थायिना च भवितव्यम्।

अथ मनोवृत्तिनिरोधपूर्वकं निगूढचेतनमतिचेतनं च प्रविश्य व्युत्थानक्रमेण ततो मानससोपाने पुनरावरोहो न सम्यक्कारीति श्रीअरविन्दो मन्यते। तन्मतेन त्वारोहा-नन्तरं मनोऽप्युत्थाप्यं नाम। मनस्तावदहंकारकेन्द्रितम्। अथ मनस उत्थापनमहंकारो-

स्थापनपूर्वकमेव भवितुमर्हति । उत्थापितोऽहंकारस्तु निगूढचेतनान्तर्गतस्यान्तश्चेतनस्य तादूप्यं भजते । यावदाणविकमनःकेन्द्रभूतोऽहंकारः सर्वनिराकरणपरो भवति तावद् वैश्वाकारनिगूढचेतनकेन्द्रभूतोऽन्तश्चेतनः सर्वसमावेशशीलः । अथाहंकारे तावदन्तश्चेतने विलीने सति मनो निगूढचेतनत्वमुत्थाप्यते । एनां स्थितिं प्राप्य व्यष्टिरात्मान्तर्हितं सामष्ट्यमभिजानाति । अतः परं निगूढचेतनादुत्थायान्तश्चेतन आत्मत्वं प्राप्नोति, परिचेतनस्त्वतिमानसचैतन्यत्वम् । अत्रारूढा व्यष्टिरात्मनः सामष्ट्यम्, सर्वातिक्रान्तत्वं च सपद्येव साक्षात्कुरुते ।

ननु निगूढचेतनातिचेतनाभ्यां सम्पृक्तं प्रकाशितं च मनोऽवचेतनाचेतनौ कथं वशीकुर्यात् ? श्रीअरविन्दस्तु यावत् प्रथमे कल्पे मनःकृतमवचेतनाचेतनप्रवेशं वर्जयति तावद् द्वितीये कल्पेऽतिचेतनसम्बलितेन निगूढचेतनेनैतयोः प्रकाशनं परीक्षणं स्वरूपोत्थापनं च विदधाति । एतस्य विधानस्य पृष्ठतस्तु कारणकार्यसम्बन्धोद्भवस्तर्कोऽनुसन्धेयः । कार्यं नाम कारणे विलयितुमर्हति, न तु कारणं कार्ये । मनस्तु मूलतोऽवचेतनकार्यम् । एतादृशं तत् प्रविष्टं सद् एतयोर्विलयितुमर्हति । मनस्यवचेतनाचेतनविलीने सति तु पाशवप्रवृत्तिरुपजन्या । मूलतोऽतिचेतनकार्यत्वान्निगूढचेतनस्त्ववचेतनाचेतनप्रविष्टः सन् तन्मयो भवितुं नार्हति । प्रबलतरत्वात् त्वेष एतौ प्रकाशयितुं परिणमयितुं च शक्नोति । एवं सति, अतिचेतनस्थेन निगूढचेतनस्थेन वाऽऽत्मनाऽवचेतनाचेतनौ गवेषणीयौ, प्रकाश्यौ, स्वरूपेणोत्थापनीयौ च । यदा खल्वात्मप्रकाश एतयोरुपरि सम्पतिष्यति तदा मूलप्रवृत्तयो निम्नाभिमुखत्वं परित्यक्ष्यन्ति, दमितवासनाजन्यानि ग्रन्थीनि भिन्नानि भविष्यन्ति, अज्ञानान्धकारश्च तिरोभविष्यति । एवमज्ञानाश्रये उद्भिन्ने सति, पूर्णमनपलाप्य च ज्ञानमाविर्भविष्यति । एतद्विधज्ञानवान्पुरुषः प्रत्यक्षमप्रत्यक्षं वा, सचेतनोऽवचेतनो वा, मूलप्रवृत्त्या शिक्षितबुद्ध्या वा कदापि कथमपि मुग्धः कुकर्मा कुदृष्टिरसद्भावो वा न भविष्यति । तच्छरीरप्राणमनोऽध्यात्मगतं विरोधजातं शममेष्यति । तदीयमचेतनावचेतनप्रभृत्यध्यात्मावयवजातं त्वेकसूत्रानुस्यूतमेकप्रकाशसन्दीप्तं च भविष्यति । तदध्यात्मकेन्द्रबिन्दुस्त्वात्मा भविष्यति, न चाहंकारः । तदात्मा तु वैश्वात्मरूपो भविष्यति । असौ चात्मनि व्यष्टिसमष्टयोरतिक्रान्तिमपि द्रक्ष्यति । अत्रैव खलु ज्ञानस्य पूर्णत्वं मतम् ।

परं तु वैयक्तिकी पूर्णज्ञानवत्ता तावत् श्रीअरविन्दाभिमतसिद्धेः पूर्वार्धमात्रमेव । व्यष्टिसमष्ट्योरन्योन्याश्रितत्वात् पूर्णत्वाभिप्राप्त्यै समष्टिस्तु व्यष्टिमपेक्षते, व्यष्टिश्च समष्टिम् । तत्राप्यात्मतिरोहितसच्चिदानन्दोपजायमानसमष्टिनिर्गताभिर्व्यष्टिभिरेवास्माकं सृष्टिरारोहोन्मुखीति प्रत्यक्षं दृष्ट्वा ज्ञायते यद् व्यष्टिसमष्ट्योरन्योन्याश्रितत्वेऽपि

व्यष्टिमुखेनैवैषाऽग्रे प्रसरतीति । अथ पूर्णज्ञानावतारणाभियानो नाम व्यष्टिमुखेनैव प्रवर्तनीयः । अवरोहारोहसिद्धान्तानुसारं तु जगत् स्वत एव पूर्णज्ञानोन्मुखमास्ते । किंतु व्यष्टिसहयोगमवाप्यैषा प्रवृत्तिस्तावद् द्रुततरा भवितुमर्हति । अथ पूर्णज्ञानवतीषु व्यष्टिषु प्रकृतिव्यापारसहयोगोन्मुखीषु सत्सु व्यष्टिविशेषोपार्जितं ज्ञानं नामानेकासु व्यष्टिषु प्रसरिष्यति । अनया रीत्या पूर्णज्ञानवतीनां व्यष्टीनां सङ्ख्योत्तरोत्तरवृद्धिं गच्छन्ती कस्मिंश्चिदागामिकाले विश्वव्यापिनी भविष्यति । तदा व्यष्टिः सामष्ट्यं प्राप्स्यति, समष्टिर्व्यष्ट्यविरोधिनी भविष्यति, व्यष्टिसमष्टी सर्वातिशायितत्त्वस्याङ्गभूते भविष्यतः, जडतत्त्वं चैतन्यसमन्वितं भविष्यति, अहंकार आत्मान्वितो भविष्यति, आध्यात्मसंस्था सामस्त्येन प्रकाशिता भविष्यति, व्यष्टिश्च समाजमध्ये आत्मानुरूपं पदमभिज्ञास्यति । एतस्यामेवावस्थायां पूर्णज्ञानस्य प्रतिष्ठेति श्रीअरविन्दो मन्यते ।

ज्ञानं नाम चैतन्यस्वरूपम्, चैतन्यं सत्स्वरूपम्, सच्चैकरूपम् । सतस्त्वेकरूपत्वात्, ज्ञानेनाप्येकरूपेण भवितव्यम् । एवं सति, असमन्वितं ज्ञानं तावदपूर्णं स्यात् । पूर्णे ज्ञाने तु निरपेक्षसत्तया सह सापेक्षसत्ता सामञ्जस्यं प्राप्स्यति, निर्गुणेन सह सगुणः, एकत्वेन सहानेकत्वम्, निर्वैयक्तिकत्वेन च सह वैयक्तिकत्वम् ।[३] एष सामञ्जस्यव्यापारश्च कथमपि पक्षविशेषोपेक्षापूर्वको न स्यात्, प्रत्येकस्य पक्षस्य सत्स्वरूपत्वात् । पक्षाणामन्योन्यविरोधो ह्यवरचैतन्यदौर्बल्योपजातो भवति । उच्चतरचैतन्यारोहानन्तरं त्ववरचैतन्यप्रतीतो विरोधो विगलितो भवति । यथा खल्ववरसङ्गीतग्रहणशक्तौ मूर्च्छिता विविधाः स्वराः परस्परमसमन्विताः प्रतीयन्ते, उच्चतरग्रहणशक्तौ मूर्च्छितास्तु ते एव स्वरा एकस्वरत्वानुभूतिं सञ्जनयन्ति, एवमेव श्रीअरविन्दोऽन्योन्यविरुद्धदिग्गामिज्ञानसरणिष्वपि समन्वयोन्मुखत्वं पश्यति । तेन खलु सर्वेऽपि वैश्वज्ञानतन्तवः पूर्णज्ञानवीणायां विनेतुं चेष्टिताः ।[४] तन्मतेन हि—

> "विज्ञानवत्, तत्त्वज्ञानेऽपि तत् सर्वसामान्यमात्यन्तिकं समाधानं सर्वश्रेष्ठं भवितुमर्हति यत् खलु सर्वविधान्यनुभूत्यात्मकानि सत्यानि स्वात्मनि समाधत्ते, व्याख्यायते, तत्तत्स्थाने च प्रतिष्ठापयति । तदेव ज्ञानं सर्वोन्नतं पदं लब्धुमर्हति यत् सर्वविधानां ज्ञानतत्त्वानां प्रकाशकम्, संयोजकम्, समन्वयपरं चास्ति ।"[५]

३. श्रीअरविन्दग्य. दि सिन्थेसिस ऑफ़ योग, पृ० ४४०.

४. तस्मिन्नेव, पृ० ४८५.

५. दि लाइफ़ डिवाइन, पृ० ५५६.

ननु श्रीअरविन्दप्रतिपादितं पूर्णज्ञानविषयकं मतं तावत् सम्यग्ज्ञानविषयकेन शाङ्करमतेन सह तुलनामर्हति । श्रीअरविन्दवत्, श्रीशङ्कराचार्योऽपि तर्कमात्राश्रितानां सिद्धान्तानामन्योन्यविरुद्धत्वाद् विप्रतिपत्तिविषयकतां प्रदर्शयति । तथा हि, केनचित् तार्किकेणोपपादितः कश्चित् सिद्धान्तः किञ्चित्कालपर्यन्तं सम्यग्ज्ञानमिव प्रतीयमानोऽपि तार्किकान्तरेणान्यथा व्युत्थाप्य तत्त्वाद् विचाल्यते । अथानया रीत्याऽनेकरूपविपरिवर्तमानं ज्ञानं कथमपि सम्यग्ज्ञानास्पदार्हं न भवति । सम्यग्ज्ञानं तु त्रिकालव्यवस्थितम्, एकरूपं च भवति, अग्नेरौष्ण्यवत् ।[६] तन्मतेनैतादृशं ज्ञानं तावद् वेदादेवोपलभ्यम् । अपरं चैतद्विधं ज्ञानमसौ जगत्प्रपञ्चप्रविलयकारकम्, मोक्षप्रदायकं च मन्यते । जगत्प्रपञ्चप्रविलयविषयेऽसौ "अग्नितापसम्पर्काद् घृतकाठिन्यप्रविलय" इत्येनामुपमां पूर्वपक्षीकृत्य "एकस्मिश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्च"–प्रविलय इत्येनामुपमां स्वीकरोति, अन्यथा त्वेकस्यां व्यष्टौ मुक्तायां "पृथिव्यादिशून्यं जगदभविष्यत्" ।[७]

एतावता ज्ञायते यत् श्रीशङ्कराचार्यस्य श्रीअरविन्दस्य च मध्ये आत्यन्तिकं ज्ञानमधिकृत्य त्रिविधो मतभेद इति । प्रथमं तावत् तर्कलभ्यज्ञानस्यात्यन्तिकत्व समवेतस्वरेण निरसतोरप्येतयोर्मध्ये यावत् श्रीशङ्कराचार्योऽसन्मूलमेतदिति मन्यते, तावत् श्रीअरविन्द एतदपि सन्मूलमिति । स्वस्वमतानुरूपमेनं विभेदमनुसरतोरेतयोर्मध्ये यावत् श्रीशङ्कराचार्यः तर्कज्ञानं सम्यग्ज्ञानत्वादपच्यावयते तावत् श्रीअरविन्द एतत् पूर्णज्ञानावयवत्वमुन्नीयते । एतदेवावचेतनप्रभृतिज्ञानसाधनैरुपार्जितस्य स्वप्नप्रभृतिज्ञानस्य विषयेऽपि वक्तुं शक्यते । एतेषां त्यागात्यागाभ्यां श्रीशङ्कराचार्यस्य श्रीअरविन्दस्य च मध्ये ज्ञानमधिकृत्य भृशमन्तरमुत्पद्यते । एतावुभावेव कस्यचिदात्यन्तिकस्य ज्ञानस्वरस्यान्वेषिणावित्यत्र नास्ति कोऽपि सन्देहो नाम । किं त्वेनं स्वरं यावत् श्रीशङ्कराचार्यो निखिलावरज्ञानस्वरोच्छेदसाध्यं मन्यते तावत् श्रीअरविन्दः सर्वस्वरसमन्वयजन्यम् । द्वितीये कल्पे, यावत् श्रीशङ्कराचार्यः सम्यग्ज्ञानं वेदमात्रोपलभ्यं मन्यते तावत् श्रीअरविन्दः पूर्णज्ञानं जनमानसप्रयाससाध्यम् । ननु वेदमात्रोपलभ्यत्वात् सम्यग्ज्ञानं नाम सर्वथा परिनिष्पन्नम्, वैयक्तिकत्वेनाभ्यासार्हम्, वैयक्तिकमोक्षोपायत्वेनोपयोजनीयं चास्ति । जनमानसप्रयाससाध्यत्वात्तु पूर्णज्ञानं नाम सततविकासोन्मुखम्, व्यष्टिसमष्टिभ्यां सममेवानुसन्धेयं चास्ति । उभाभ्यामनुसन्धेयत्वात्त्वेतदुभयोरेव मुक्तौ पर्यवसितुमर्हति । तृतीये कल्पे,

---

६. श्रीशङ्कराचार्यस्य, ब्रह्मसूत्रभाष्ये, २।१।११.

७. तस्मिन्नेव, ३।२।२१.

यावत् सम्यग्ज्ञानं पृथिव्यादिमयं जगद् व्यष्टिकृते प्रविलापयति, समष्टिकृते च प्रागवस्थायां प्रहिणोति, तावत् पूर्णज्ञानं नाम व्यष्टेः समष्टेश्चोभयोरेव कृते एतस्मिन् दिव्यत्वमवतारयति। एवं यावत् सम्यग्ज्ञानं व्यष्टिसमष्ट्यात्मकस्य जगत उच्छेदपरं तावत् पूर्णज्ञानं नाम व्यष्टिसमष्टिमध्यगतमज्ञानं निरस्यैतयोः सामञ्जस्यकारकम्, परमतत्त्वताद्रूप्ये उत्थापकं चास्ति।

———

## त्रयोदशोऽध्यायः

# पूर्णयोगः

पूर्णज्ञानसाधनत्वेन श्रीअरविन्दः पूर्णयोगं प्रवर्तयते। तत्त्वस्वभावप्रवृत्त्यनुरूपचैतन्योपयोजनमेव पूर्णयोग इति तन्मतम्। तत्त्वं तु ब्रह्म, तत्स्वभावश्च सच्चिदानन्दः। सच्चिदानन्दस्य प्रवृत्तिश्चित्शक्तिः। चित्शक्त्यनुरूपचैतन्यप्रवर्तनं नाम पूर्णयोग इत्ययं समासार्थः। अवरोहारोहव्यापारोपजातस्य जगतः सच्चिदानन्दस्वरूपत्वात्, तद्गतः प्रत्येकः पदार्थः तत्त्वतः सच्चिदानन्दभूत एव। तथा सति, प्रत्येकेन पदार्थेनान्तर्हितचित्शक्तिमयेन भवितव्यम्। अथ प्रत्येकस्य पदार्थस्य शाश्वतो धर्मोऽस्ति यदसौ सच्चिदानन्दवद् वर्तेत, चित्शक्तिवत् स्वीयां शक्तिं विनियोजयेच्च।

अवरोहक्रमेण तिरोहितस्वरूपः सच्चिदानन्दस्तावदारोहोन्मुखः सन् प्रथमे कल्पे सत्तामाविर्भावयति अथ चैतन्यम्, अन्ततो गत्वा चानन्दम्। अपरं च, यावत् सत्ता चैतन्यविहीना भवति तावदारोहगतिर्मन्थरा भवति, यतः प्रभृति चैषा चैतन्यसम्बलिता भवति ततः प्रभृति आरोहो द्रुततरः सञ्जायते। अथैतावता ज्ञायते चैतन्यस्य जगद्विकासकारकत्वम्। तथा हि, यावत् कश्चित् पाषाणखण्डो जलप्रवाहादिबाह्यशक्तियोगेनानेकसहस्राब्दपर्यन्तमुद्वेल्ल्यमानः सन्नेव किञ्चिद् विपरिणमते, तावत् कश्चित् प्राणी आत्मचैतन्ययोगेनाभ्यन्तरतः प्रेर्यमाणः, भोजनादिग्रहणेनानुक्षणं वर्धमानश्च स्वल्पेनैव कालेन यथाभिलषितमाकारं भजते। तत्रापि चैतन्यतत्त्वस्यात्यल्पाविर्भावादवरेषु प्राणिषु खलु विकासगतिर्मन्थरा भवति। स्वल्पचैतन्यवत्त्वात् तु ते जडप्रकृतिनिबद्धा भवन्ति। चैतन्ययोगेनैतस्याः प्रकृतेरात्मानमुन्मोच्य समग्रचित्शक्तिमये पथे प्रवृत्तिरेव पूर्णयोग इति श्रीअरविन्दः प्रतिपादयति।

आरोहक्रमेण मानवत्वमागत्य खलु सृष्टिरात्मचैतन्यसम्बलिता भवति। एतच्चैतन्यं त्वेकस्मिन् पक्षे मानवं नियोजितक्रियाक्षमं कुरुते, पक्षान्तरे चात्मावस्थानार्हम्। नियोजितक्रियाक्षमता तु तं जडप्रकृतेरग्रेसृत्यात्मकौशलं प्रदर्शयितुं प्रवर्तयति। पाषाणखण्डस्तु तथैवावतिष्ठति यथा प्रकृतिस्तमवस्थापयति। अतः परम्, आविर्भूतात्मविकासप्रवृत्तिरपि वनस्पतिः सर्वथा प्रकृतिमनुवर्त्यैवात्मलक्ष्यं प्राप्नोति। पशवस्त्वभ्यास-

बलेन किञ्चिन्मनुष्यवदाचरितुं शक्नुवन्ति। एवं तेषु तावत् प्रकृतिबन्धविनिर्मुक्तिक्षमता प्ररोहोन्मुखी भवति। एषैव क्षमता मानवेषु पुनरानन्त्यं व्रजति। पशोरात्मचैतन्यं तावदिदानीन्तनम्, आहारविहारमात्रपरिमितं च भवति। परं तु मानवीयमात्मचैतन्यं सर्वदेशकालज्ञानक्षमम्, सर्वभूतव्यापकम्, परमतत्त्वावबोधकं च भवितुमर्हति। मानवेषु य एनां सम्भावनां यावन्मात्रं साक्षात्कुरुते, तावन्मात्रमसौ विकासं भजते। अतएवैकतो वन्यजनस्यात्मचैतन्यं शरीरप्राणमनोमात्रकेन्द्रितं वर्तमानमात्रपरिच्छिन्नं च भवति, अन्यतश्च महात्मन आत्मचैतन्यं निखिलजगद्व्यापकं भवति। मानवेष्वन्तर्हितैषा क्षमता क्रियायामप्यभिव्यज्यते। तथा ह्येकत्र वन्यजने पर्णकुटीनिर्माणपदातिगमनाग्निप्रज्वालनपाषाणखंडप्रक्षेपणरूपाः क्षमताः विद्यन्ते, अन्यत्र च विज्ञानविदि तावदद्भुतभवननिर्माण-परमाणुविस्फोटन-प्रक्षेपास्त्रसम्प्रेषण-नक्षत्रान्तरगमनरूपाः क्षमता आविर्भूताः। सत्यं यदपरिमितात्मचैतन्यवन्तो महात्मानः, अद्भुतक्रियानियोजनप्रवणाश्च विज्ञानविदोऽल्पसङ्ख्याका एव। किं त्वेतादृशो महात्मानो विज्ञानविदश्च नाभविष्यन् चेत्, मानवसंस्कृतिः पृष्ठत एवावरुद्धाऽभविष्यत्। अथ चेदेषा द्रुततरज्ञानक्रियाक्षमता व्यापकं लक्ष्यमुद्दिश्य सुव्यवस्थितप्रकारेणोपयुज्येत, तर्हि जगतो महत्कल्याणं भवेत्।

द्रुततरज्ञानक्रियाक्षमताया उपयोगस्योदाहरणानि तावन्मानवेषु सुचिरकालात् प्राप्यन्ते। तथा हि, अध्यात्मज्ञानविषये यदेतरे भारतवासिनो वैदेशिकाश्च प्राथमिकावस्थायां न्यवसन् तदा केचिद् वेदर्षयः परमात्मना सममात्मनस्तादात्म्यमनुसन्दधुः। तेषामेतदनुसन्धानं खलु दर्शनशास्त्रान्तर्गतं चरमोपलब्धिकल्पमिति मन्तव्यम्। अद्य पर्यन्तं हि मानवमनीषा ततोऽग्रे प्रयातुं नाशक्नोत्। परमेतद् ज्ञानं तदानीं तु केषुचिदृषिष्वेवाविर्बभूव। एतज्ज्ञानवतामृषीणां प्रतिवेशिन इतरे जनास्तु प्राथमिकेऽज्ञाने एवोषुः। का वार्ता पुनः प्रतिवेशिनाम्, तद्वंशजेष्वपि केचिदेव तज्ज्ञानं सम्यगवगन्तुं समर्था बभूवुः। एवं सत्यपि तज्ज्ञानस्य परिसीमा कालक्रमेण शनैश्शनैर्विस्तारमभजत्। अथैतस्या विस्तारप्रवृत्तेः परामर्शात् सुतरामनुमातुं शक्यते यत् कस्मिंश्चिदागामियुगे एतज्ज्ञानं तावन्निखिलमानवसमाजसम्पत्तिर्भवितेति।

एतद्विधं ज्ञानं तु व्यवस्थाय कदाचित् सामान्यजनग्राह्यं भविष्यतीत्येतस्मिन्ननुमाने उदाहरणत्वेन भौतिकविज्ञानविकासरीतिः परामष्टुं शक्यते। तथा हि, अद्यतना बहवो विज्ञानसम्मताः सिद्धान्ताः प्राचीनयुगे एव विचारकैरन्विष्टाः। ईसवीये पञ्चमशतके एव श्रीआर्यभट्टेन प्रतिपादितं यत् पृथिवी सूर्यं परिक्रामतीति। ततोऽपि पूर्वतरं भगवता शाक्यमुनिना दृष्टं यज्जगत्स्थितं पदार्थजातमन्योन्यसापेक्षमिति। ततोऽपि पूर्वतरमौपनिषदर्षिणा दृष्टं यत् तत्त्वमक्षयमिति। किं त्वेतदाविष्कारजातं

सुदीर्घकालपर्यन्तं वैयक्तिकचिन्तनमात्रनिष्ठत्वादज्ञातप्रायमेव बभूव। वर्तमानयुगे तु, विज्ञानविताने सुव्यवस्थिते सति एते सिद्धान्ताः प्रामाण्यकोटिमानीय क्रियान्विताः। विकीर्णानां विज्ञानसम्मताविष्काराणां क्रियान्वित्यर्थं तावत् प्रमाणपुष्टा, सामान्यजनग्राह्या सर्वसम्मता च विज्ञानरीतिरपेक्षिता। एषा रीतिस्तु वर्तमानयुगीनविज्ञानप्रवर्तकैर्वैयक्तिकस्वार्थपरित्यागपूर्वकमुपबृंहिता। एतद्विध एवादर्शोऽध्यात्मविज्ञानकल्पस्य योगस्यापि पुरस्तान्निधातुं शक्यते। तथा हि, याः काश्चिदध्यात्मज्ञानसरण्य इतस्ततो विकीर्णा विद्यन्ते ताः सर्वा अपि ततस्ततोऽन्विष्यैकस्मिन्नेव ज्ञानराजमार्गे विनेयाः। एवं सति, केऽपि तज्ज्ञानानुसन्धित्सवो यत्र क्वापि भविष्यन्ति ते सर्वे एव स्वस्वाधिष्ठानोपलभ्यां सरणिमवलम्ब्याग्रेसरन्तो निखिलसरणिजालकेन्द्रभूतं लक्ष्यं स्वस्ववेगानुरूपमनुक्रमेण प्राप्स्यन्ति। श्रीअरविन्दप्रतिपादितः पूर्णयोगस्तु सर्वविधयोगसरणिसम्मिलनोपबृंहित एतादृश एव जगद्विकासराजमार्गः। एतस्मिन् योगे खलु हठ-राज-ज्ञान-भक्ति-कर्म-प्रभृतीनां सर्वेषां योगपथानां समन्वयो दृश्यते।

ननु प्रत्येको योगमार्गो मानवव्यष्टिनिहितां कामपि विशिष्टां शक्तिमवलम्ब्य प्रवर्तते। तथा हि, हठयोगस्तावत् प्राणमवलम्बते, राजयोगो मनः ज्ञानयोगो बुद्धिम्, भक्तियोगो रागम्, कर्मयोगश्च क्रियाम्। अथ जिज्ञासा समुत्पद्यते पूर्णयोगस्य क आधार इति। श्रीअरविन्दस्तु पूर्णयोगं निर्विशिष्टाधारं मन्यते। आधारत्वेन हि कस्याञ्चिद् विशिष्टायां शक्त्यां स्वीकृतायां सति, इतराः सर्वा एव शक्तय उपेक्षिता भविष्यन्ति। उपेक्षितेतरशक्तिस्त्वेष योगः पूर्णत्वादपसरिष्यति। अतएव पूर्णयोगस्याधारत्वेन श्रीअरविन्दो निर्विशिष्टं सम्पूर्णमेव मानवस्वभावं स्वीकरोति।[1]

निखिलमानवस्वभावपरिष्कारपूर्वकमध्यात्मनि दिव्यभावस्यावतारणमस्य योगस्य तावत् प्रथमं लक्ष्यम्। साम्प्रतिको मानवस्वभावः खल्वज्ञानदूषितः। अज्ञानं नाम चैतन्यसङ्कोचलक्षणम्। अहंकारस्त्वेतस्य सङ्कोचस्याश्रयः। अथ पूर्णयोगाभ्यासस्यारम्भबिन्दुरहंकारबन्धनशिथिलीकरणचेष्टैव। अहंकारग्रन्थेः क्लिष्टबन्धत्वं तु तदर्पितमिथ्यात्मप्रतीतिजन्यम्। एनां प्रतीतिमपाकर्तुं चाध्यात्मविषयकः तत्त्वद्वित्वसिद्धान्तः सम्यगभिज्ञेयः। अध्यात्मनि तावदेकत आरोहव्यापारोपजातमहंकारकेन्द्रितमुपरितनं मनः, अन्यतश्चावरोहक्रमोपलब्ध आत्मकेन्द्रितो निगूढचेतनो नाम।[2] कस्माच्चित् सोपानात् सोपानान्तरारोहणायारुह्यमाणसोपानीयावरोहस्यापेक्षि-

१. श्रीअरविन्दस्य, दि सिन्थेसिस ऑफ योग, पृ० ५२.

२. दि लाइफ़ डिवाइन, पृ० २६२-३.

तत्वात्, साम्प्रतिकारोहार्थमहंकारबन्धनशिथिलीकरणपूर्वकमूर्ध्वसोपानीयं तत्त्वमवतारणीयम्। एतत् तत्त्वं त्वात्मा। अहंकारस्यात्माभासस्वरूपत्वात्, आत्मनि ज्ञाते सति, अहकारः स्वत एव शिथिलबन्धो भविता। अथ यथाऽयोगावस्थायां सर्वे मानसा भावा अहंकाराय समर्प्यन्ते, तथैव योगावस्थायां ते आत्मने समर्पयितव्याः। एवं कुर्वता साधकेनान्ततोगत्वाऽनुभवितव्यं मम सर्वाः चिन्तन-भावन-क्रियाशक्तयः खल्वात्ममूलाः, न चाहंकारमूला इति। एवं सति, तदीयं विचार-भाव-क्रियाजातं परिपूतं भविष्यति।

अतः परं तु साधकस्य पुरस्ताद् द्वौ मार्गौ विद्येते, पुरुषमार्गः प्रकृतिमार्गश्च। एष मार्गभेदश्च शक्तिशक्तिमद्विभेदाश्रितः। शक्तिमन्मार्गानुसारिणा साधकेन त्वतः परं चैतन्यस्यात्ममूलत्वं पुरुषोत्तममूलत्वं वाऽनुभूयते। शक्तिमार्गानुसारिणा साधकेन च चैतन्यस्य दिव्यमहाशक्तिमूलत्वमनुभूयते। एषा शक्तिः खल्वात्मन्यनन्तां सत्तां धारयति, निखिलं सृष्टिवैलक्षण्यं च सृजति। परं तु येन केनापि मार्गेण प्रवृत्तः साधक एनामवस्थां प्राप्य विभाजकप्रतिबन्धविलयात् पुरुषोत्तमे महाशक्तौ वाऽऽत्मलयमनुभवति। अत्र शक्ति-शक्तिमतोरन्योन्यविभेदोऽपि विलीयते। परिणामत एतयोः परस्पराश्रितत्वमपि बोधगम्यं भवति। एषा शक्तिर्हि सैव चित्शक्तिर्या सच्चिदानन्दाश्रिता सती, आत्मान्तर्हितं क्रियाशीलत्वमुन्मीलयन्ती, एकांशेन केन्द्रीभूयातिमानसमुत्पादयन्ती, सच्चिदानन्दमात्मतिरोधापयन्ती, पुनश्चातिमानसं प्रबोधयन्ती, सच्चिदानन्दमारोहमार्गेण संयोज्य चरमोत्कर्षं नीयमाना विद्यते।

शक्ति-शक्तिमतोरैक्यमनुभूय साधकः ताभ्यां सहात्मतादात्म्यमभिजानाति। एवमात्मपृथग्भावस्य विलयादसौ जगज्जननधारणोत्थानशीलं परं तत्त्वं तादात्म्येनावगच्छति। अनेन प्रकारेण व्यष्टिचैतन्ये परमात्मलीने सति, एकतः सर्वातिक्रान्तं चरमतत्त्वं भवति, अन्यतश्च तदुपजायमानं जगत्। केचिद् योगिनस्तावदेनां स्थितिं चरमाम्, मोक्षलक्षणां च मन्यन्ते। श्रीअरविन्दस्त्वेनां पूर्णसिद्धेराद्यचरणमात्रं स्वीकरोति। तदभिमता सत्ता हि वैश्व-वैयक्तिक-सर्वातिक्रान्तभेदेन त्रिविधा। तिसृणामेव तात्त्विकत्वात्, एतासु यां कामप्युपेक्ष्यात्यन्तिकः समन्वयः स्थापयितुं न शक्यते। असावेव समन्वय आत्यन्तिकत्वाय कल्पते यस्मिन् खलु व्यष्टिः समष्टिश्च सम्यगभिज्ञाते परमतत्त्वेन च साकमवाप्तसामञ्जस्ये।

अथात्यन्तिकसमन्वयार्थं समन्वेया समष्टिरपि परिशोधापेक्षा। एतदर्थमप्यारोहावरोहलक्षणमुपायद्वयमवलम्बनीयम्। आरोहमार्गारूढाभिर्व्यष्टिभिस्तावन्न केवलमात्मविशुद्ध्यर्थमेव प्रयतितव्यमपितिवतरव्यष्टिनिमित्तमपि। एतदर्थं तु ताभिरितरेषां

जनानामाध्यात्मिकमुत्थापनं सम्पादयितुं चेष्टितव्यम् । परं त्वारोहव्यापारमात्राश्रितमुत्थापनमानन्त्यपर्यन्तं यातुं नार्हति । आनन्त्याय त्ववरोहव्यापारोऽप्यवलम्बनीयः । एतन्निमित्तं च परमतत्त्वमेव समष्टाववतारयेत् । यथा कश्चिद् विज्ञानवित् कञ्चित् प्राकृतं सिद्धान्तमन्विष्य सामान्यजनजीवने वास्तविकत्वेनावतारयति, तथैवात्मप्रयासेन सम्यगभिज्ञाय पूर्णयोगसाधकः परमतत्त्वमेव समष्टाववतारयेत् । यथा च विज्ञानविदो गवेषणा तावत् पूर्णत्वं नोपगच्छति यावत् प्रयोगशालाया बहिरानीय लोके साक्षात्काराय नोपस्थाप्यते, तथैव पूर्णयोगसाधकस्य सिद्धिः तावत् पूर्णतां प्राप्तुं नार्हति यावन्निखिलामपि समष्टिं न व्याप्नोति ।

सृष्टिप्रक्रियावत् पूर्णयोगोऽप्यवरोहारोहभेदेन द्विविधोपायः । आरोहस्तु क्रियालक्षणो भवति । एतदवस्थः साधकः शरीर-प्राण-मनोमयीं त्रिगुणात्मिकामपरां प्रकृतिं साधनत्वेन विनियुङ्क्ते ।[३] योगपथे एतस्याः प्रकृतेः साधनत्वं तु परचैतन्यायात्मसमर्पणस्वरूपमस्ति । अनेन समर्पणेन च शरीर-प्राण-मनोनिहितमसामञ्जस्यदौर्बल्यादिकल्मषजातं विगलितं भवति । शरीरादेतत्सर्वस्य निराकरणाय तु प्राणशक्तिरपेक्ष्यते । एषा शक्तिश्च भौतिकस्य प्राणस्योद्भवभूमिः । एनां साधयितुं हठयोगिनस्तावदासनं प्राणायामं च विधीयन्ते, परं श्रीअरविन्दस्तु त्रिविधध्यानोपायमङ्गीकरोति । तन्मतेन, प्रथमे कल्पे, विशदीकृतां मानसीमिच्छाशक्तिं वैश्वप्राणशक्तौ विनियुज्य शरीरे उद्भावयेत् । द्वितीये कल्पे, एनामेव शक्तिमध्यात्मशक्तौ विनियुज्यातिमानसीं प्राणशक्तिं शरीरे निपातयेत् । तृतीये कल्पे, एवमवतीर्णातिमानसी शक्तिः शरीरमनुप्रविश्य संशोधयिष्यति, परिपोषयिष्यति च ।[४]

प्राणतत्त्वस्यापि संशोधनार्थमवरोहारोहलक्षणो द्विविधोपायोऽपेक्ष्यते । आरोहोपायेन तु प्राणशक्तिरूर्ध्वमुखी कर्तव्या । किं तु प्राणस्तावत् पूर्णरूपेणोत्थापयितुं न शक्यते यावत् परचैतन्येन सह न संयुज्यते । परचैतन्यमपि प्राकृते प्राणेऽवरोढुं न शक्नोति । अथैतस्यामन्योन्यविरोधापन्नायामवस्थायामुभावप्युपायौ सममेवावलम्बनीयौ । तथा ह्येकस्मिन् पक्षे मानसेच्छाशक्त्या प्राणशक्तिं संशोधयेत् परिवर्धयेच्च, पक्षान्तरे चाध्यात्मेच्छाशक्त्याऽतिमानसीं चैतन्यशक्तिमवतारयेत् ।[५]

मनस्तत्त्वस्यापि संशोधनार्थं द्विविध उपायोऽपेक्ष्यते । प्रथमं तावन्मानसीर्विचारभावेच्छाशक्तीः संशोधयेत् । अत्र मनसः सोपानत्रैविध्यमप्यवधेयम् । चेतनमनोऽधःस्थित-

---

३. दि सिन्थेसिस ऑफ योग, पृ० ९७—८.

४. तस्मिन्नेव, पृ० ८३७—८.

५. तस्मिन्नेव, पृ० १९७.

स्यावचेतनस्य शुद्धिं विना कोऽपि साधको योगस्थिरो भवितुं न शक्नोति। अवचेतनस्था वासना मूलप्रवृत्तयश्च तत्प्रगतिपथमवरुन्धन्ति। अत्र विवेकस्तावत् किमपि हितं साधयितुमर्हति। किं तु बुद्धिविमर्शमात्राश्रितो विवेकः कथञ्चिदपि मनो विपरिणेतुं न शक्नोति। सम्यङ्मानसविपरिणामार्थं त्वतिमानसं चैतन्यं निर्व्यवधानमवतारणीयम्। एतस्य चैतन्यस्यैतादृशोऽवतारश्च मनस्समर्पणपूर्वकमेव सम्भाव्यते। एतत् समर्पणकर्म त्वहंकारेण बाध्यते। अहंकारस्त्वैहिक-पारलौकिक-मौक्षिकभेदेन त्रिविधः।[६] कर्मकाण्डपरको वेदांशस्तावदैहिकाहंकारविलयनपूर्वकं परलोकविषयकमहंकारं पुष्यति, एवं तल्लोकं च प्रापयति। शाङ्करवेदान्तस्त्वैहिकपारलौकिकाहंकारद्वयविलयनपूर्वकं मौक्षिकमहंकारं पुष्यति, मोक्षं च प्रापयति। परं पूर्णयोगस्त्वैहिकपारलौकिकमौक्षिकाहंकारत्रयविलयन-पूर्वकं जगतो दिव्यीकरणमुपदिशति। अत्र तदनुसारं त्रिविधमप्यहंकारं विलयार्हम्। एष विलयस्तु जगज्जन्मादिकारणाय परमतत्त्वायैतस्य समर्पणेन सम्भाव्यते।[७] समर्प्य-माणोऽहंकारस्तावत् परचैतन्येन सहानेकप्रकारान् सम्बन्धान् स्थापयितुं तज्जातान् विभ्रमांश्चोत्पादयितुमर्हति। एष स्वं तत्कारणत्वेन प्रस्तूय तं स्वकरणमिवोपयुयोजिषितुं शक्नोति।[८] एतस्य विभ्रमस्य निवारणाय श्रीअरविन्दो निरपेक्षद्रष्टृत्वमुपदिशति। द्रष्टृत्वभावप्रतिष्ठितः साधकस्त्वात्मकृतमात्मभावितमात्मचिन्तितं सर्वमेवेशकृतमीश-भावितमीशचिन्तितमिति मन्यते। एषा स्थितिः खल्वहंकारविलयकारिणी। परं त्वहंकारविलय एव सर्वसाधनापर्यवसानमिति न मन्तव्यम्। अतः परं त्वहंकारस्थाना-पन्नस्य मानसपुरुषस्य परमात्मना सह तादात्म्यमनुभूयाधस्तान्निवर्तितव्यं जगच्चोत्था-पितव्यम्।[९] एष मानसपुरुष एवात्मसात्कारपूर्वकं परचैतन्यज्योतिर्जगत्यवतारयन् विज्ञानमयपुरुष इत्याख्यां व्रजति। विज्ञानमयपुरुषः खल्वनन्तचैतन्यः, विश्वव्यापकः, विश्वातिक्रान्तश्च।[१०]

पूर्णयोगस्त्विष्टदेवताः, अवतारान्, गुरूंश्चापि साधनत्वेनोपयोजितुमर्हति। एतेषामुपयोगेन साधनासौकर्यं जायते नाम। परं त्वहंकारसम्मिश्रणादेतान्येव साधनानि योगवैशद्यबाधकत्वेनाप्युपस्थातुमर्हन्ति। अहंकारवशीभूतः कश्चित् साधकोऽस्मिन् प्रसङ्गे "ममेश्वरः, ममावतारः, मम देवदूतः, मम गुरुर्वेति" ब्रवीति चेत्, तद्योगस्य

---

६. तस्मिन्नेव, पृ० ५०६.

७. तस्मिन्नेव, पृ० ८६७४.

८. तस्मिन्नेव, पृ० ८७६—७.

९. तस्मिन्नेव, पृ० ८७३.

१०. तस्मिन्नेव, पृ० ९५८.

पूर्णत्वमेवापह्नीयते । पूर्णयोगसाधकस्तु "तावत् तुष्टिं न लप्स्यते यावत् सर्वाणि देवनामानि देवरूपाणि च स्वीये देवप्रत्यये समाविष्टानि न करिष्यति, स्वां देवतामितरासु सर्वासु देवतासु न द्रक्ष्यति, सर्वान् अवतारांश्चावतारकारणभूते परमात्मनि नैकीकरिष्यति ।"[११]

अनेन प्रकारेण पूर्णयोगस्य पूर्णत्वं खलु विविधयोगसम्प्रदायानां विचारसरणीनां च समन्वये निहितमास्ते । ज्ञानभक्तिकर्मयोगिनस्तावदन्योन्यतिरस्कारपूर्वकं स्वं स्वं मतं सर्वोत्कृष्टत्वेन प्रस्तूयन्ते । श्रीअरविन्दस्त्वेनां विचारपद्धतिमतर्कसम्मताम्, अनर्थकारिणीं च मन्यते । तन्मतेन, ज्ञानमस्मान् परचैतन्यशृङ्गे उन्नीयते चेत्, भक्तिस्तावत् तेन शृङ्गेण सहास्माकीनं तादात्म्यं स्थापयति । तादात्म्यभावपरिणतमेव ज्ञानमात्यन्तिकत्वाय कल्पते । अपरं च, ज्ञानस्य सदनन्यत्वात्, सतश्च परिणामाविरुद्धत्वात्, ज्ञानस्य पूर्णत्वाय क्रियात्मका परिणतिरप्यावश्यकीया । एतस्मात् कारणात् कर्मयोगोऽपि पूर्णयोगाङ्गत्वेनानुपेक्षणीयः । एवम् "एते त्रयोऽपि मार्गा अन्योन्यनिराकरणशीलत्वं विहाय पूर्णयोगे समन्विता भवन्ति, किंवान्योऽन्येभ्य आविर्भवन्ति । मनोमयकोशविमुक्तात्मानो वयं परतत्त्वे निवसामः; भक्तिद्वारेण च चरमप्रेमानन्दैकत्वं प्रविशामः । कर्मयोगेन त्वस्मत्सत्तायाः सर्वाः शक्तय एकस्यां शक्तौ समुत्थाप्यमानाः, अस्मदिच्छाशक्तिः क्रियाश्चैकस्यै इच्छाशक्त्यै समर्प्यमाणाश्च दिव्यप्रकृतेर्गत्यात्मकं पूर्णत्वमुपलभन्ते ।"[१२]

पूर्णयोगमार्गस्थमन्यद्विरोधस्थानं हठयोग-राजयोगान्तर्गतमिति मन्यते । हठयोगिनस्तावत् प्राणवशीकारपूर्वकं चरमतत्त्वमधिगन्तुमिच्छन्ति, परं राजयोगिनस्तु मनोवशीकारपूर्वकम् । एतस्मात् प्रक्रियानुगतभेदवशादेतौ खल्वन्योन्यप्रत्यनीकभूतौ संवृत्तौ । प्राणश्च मनश्चोभयमेव वशीकरणापेक्षमिति तु श्रीअरविन्दो मन्यते । तन्मते चैतन्यं खलु शक्तिभूतम् । यथा शक्तिर्वाहकतन्तुमाध्यस्थ्येन प्रवहति तथा चैतन्यमपि । यथा प्रवाहसौकर्याय प्रवाह्यमाणशक्तिमात्रानुरूपशक्तिमत्प्रवाहतन्तुरपेक्ष्यते तथैव चैतन्यस्याप्यध्यात्मप्रवाहाय तदनुरूपाणि मनःप्राणनाडीतन्त्राण्यपेक्ष्येरन् । सामान्यजनसुलभं चैतन्यसंस्थानं तु सामान्यमानसचैतन्यप्रवाहक्षममात्रं भवति । परचैतन्यं तु भृशं बलवत्तरम् । अथ नैसर्गिके चैतन्यसंस्थाने परचैतन्यावतारणं भयावहं भवितुमर्हति । एतस्य भयस्य निवारणाय चैतन्यसंस्थानस्य संशोधनम्, परिपोषणं चानिवार्यं । हठयोगराजयोगौ त्वेतदर्थमतीवमहत्त्वपूर्णौ मतौ । एतस्मात् कारणात् पूर्णयोगप्रक्रियायां

११. तस्मिन्नेव, पृ० ७४.

१२. तस्मिन्नेव, पृ० ३१६—७.

श्रीअरविन्द एतावुभावपि समावेशयति । तन्मतेन पूर्णयोगाभ्यन्तराभ्यस्तावेतौ चरमलक्ष्यप्राप्तौ सौकर्यमुत्पादयितुमर्हतः ।[१३] परं तल्लक्ष्यप्राप्तेरात्यन्तिकसाधनत्वेनैतावुभावपि मिलित्वा न पर्याप्तौ स्तः, का च वार्तैतयोरन्यतरस्य । अथ हठयोग-राजयोगौ सममभ्यस्यतापि साधकेन पूर्णत्वाय ज्ञान-भक्ति-कर्मलक्षणानां योगपथानामाश्रयणमनिवार्यम् । शरीरप्राणमनांसि हि तावद् विशुद्धीभूय दिव्यशक्तिग्रहणसक्षमानि भवितुं नार्हन्ति यावद् दिव्यशक्तिरेवैतानि परिगृह्य न तु संशोधयति नैव परिपोषयति ।

संन्यासयोगोऽपि पूर्णयोगे समन्वयार्हः । अद्वैतब्रह्मैव सदित्यस्य योगस्याधारभूतः सिद्धान्तः । नन्वेवं मते सति, ब्रह्मव्यतिरिक्तस्य जगज्जातस्य मिथ्यात्वं स्वत एव सिद्ध्यति । अथानेन योगेन जगन्मिथ्यात्वसाधनपूर्वकं सर्वविधक्रियाव्यापारनिरोध उपदिष्टः । एनमुपदेशमनुसरन्तः संन्यासयोगिनस्तावत् सर्वाभ्यः क्रियाभ्यो विरन्तुमिच्छन्ति । एतदर्थं ते गृहं त्यक्त्वा वनमाश्रयन्ते, भिक्षाचर्यं च चरन्ति । केचित् संन्यासिनस्त्वेतस्यामवस्थायामपि निश्शेषक्रियाव्यापारपरित्यागस्यासम्भाव्यतामनुभूय यन्त्रवदनिच्छापूर्वकं कर्म चिकीर्षन्ति । एवं कर्म कुर्वन्तोऽपि 'वयं खलु निष्क्रिया' इति ते आत्मानं समाश्वासयितुं यतन्ते । सर्वाणि कर्माणि हि प्रकृतया क्रियन्ते, सा चाब्रह्मस्वरूपेति तेषां मतम् । अपरं च, प्रकृतिस्तु पुरुषोत्तमशक्तिभूता, तद्गतं कर्मजातं च तत्त्वतः पुरुषोत्तमगतमिति निर्धारयन्ती भगवद्गीता तावत् फलपरित्यागपूर्वकं कर्माचरणमुपदिशति । श्रीअरविन्दस्तु संन्यासयोगगतासंगतिनिराकरणपरमेतद् भगवद्गीतामतमात्मसिद्धान्तानुरूपं विस्तारयति । चित्शक्तेः सच्चिदानन्दक्रियाशक्तिभूतत्वात्, तत्कृतं कर्मजातं तत्त्वतः सच्चिदानन्दगतमिति तु तन्मतेन सिद्धम् । अथ निखिलमेव कर्म भागवतमित्यपि निश्चीयते । स्वार्थबुद्ध्यापि कृतं कर्म परोक्षभावेन शनैश्शनैरन्ततोगत्वा सच्चिदानन्दं प्राप्नुयात् । किं तु तदेव भागवतबुद्ध्या कुर्याच्चेत्, तर्ह्यपरोक्षभावेन सद्य एव तमुपगच्छेत् । एवमनुचिन्त्य पूर्णयोगसाधकेनाहंकारविसर्जनपूर्वकं भागवतबुद्ध्या कर्मजातं कर्तव्यम् । अत्र पुनरवधेयं यन्निरहंकारत्वं तावत् कदाचिदौदासीन्यजनकं न भवेदिति । क्रियाया अपि सच्चिदानन्दस्वरूपत्वात्, तच्छीलत्वे न स्याद् योगिनः काचिद् हानिः । असौ त्वेतेन सच्चिदानन्दस्यैव प्रयोजनं साधयति । अमुष्मात् तु केवलमेतदेवापेक्ष्यते यदसौ क्रियाव्यापारकेन्द्रबिन्दुत्वेनाहंकारमुत्सृज्य सच्चिदानन्दमेव प्रतिष्ठापयेत् । एवं कुर्वन्नसौ न केवलं परमतत्त्वमेवाप्नोतुं शक्नोति, अपितु जगदपि ताद्रूप्येण परिणमयितुमर्हति । अथ यावत् संन्यासयोगो व्यष्टेः परमतत्त्वताद्रूप्यमात्रे परिणमते तावत् पूर्णयोगः समष्टिमपि परमतत्त्वमयीं कर्तुं यतते ।

---

१३ तस्मिन्नेव, पृ० ८३६.

"ईश्वरस्य जगद्व्यापकत्वेन तदतीतत्वेन च साक्षात्कारश्चेत् सर्वोत्कृष्टं ज्ञानम्, तर्हि तत्साक्षात्कारपूर्वकं सत्तासोपानारोहावरोहलक्षणां स्वाधीनां शक्तिमुपार्ज्य जगदवतरणशक्तिमत्त्वं तद्व्याप्तिमत्त्वं च पूर्णयोग इति नामधेयम्" ।[१४]

योगव्यतिरिक्ता भौतिकविज्ञान—मनोविज्ञान – समाजविज्ञान - धर्मशास्त्र—कलाशास्त्रप्रभृतिबह्व्योऽन्या ज्ञानसरण्यो विद्यन्ते । एताभिरपि जगत् सुतरां विकासोन्मुखं नीयते इति नास्ति कस्यचिदविदितं नाम । परं त्वेताः सरण्यस्तावत् सङ्कीर्णाः । एता ह्यन्तःकरणोपस्थापितं व्यवधानमतीत्य कदाचिदेव प्रवर्तितुं शक्नुवन्ति । यथा पाषाणादावुत्कीर्णां गीतिं जन्मबधिरः साङ्केतिकत्वेनैवावबुध्यते, न कदापि ध्वन्यात्मकत्वेन, तथैव विज्ञानवित् तावज्जगत् प्रतीकत्वेनैवावगच्छति, न च तत्त्वतः ।[१५] एतस्मात् कारणाद् ज्ञानान्तरमनपेक्ष्य भौतिकविज्ञानं कदापि तत्त्वावबोधकं भवितुं न शक्नोति । पूर्णयोगांगत्वेन त्वेतदपि सत्तत्त्वज्ञानसाधनं भवितुमर्हति । सच्चिदानन्दीयक्रियाशीलत्वाभिव्यक्तिभूतजगद्वैचित्र्यान्वेषणायैतद् विज्ञानमद्वितीयं साधनमित्यत्र नास्ति काचिद् विप्रतिपत्तिः । एवमेव मनोविज्ञानमपि स्वत एव सतत्त्वान्वेषणव्यापारे निरर्थकमिति स्वीकर्तव्यम् । पूर्णयोगांगभूतं त्वेतदध्यात्मान्वेषणव्यापारे भृशं सौकर्यमुत्पादयितुमर्हति । एतेन हि सूक्ष्माध्ययनपूर्वकं परिष्कृतानीन्द्रियान्तःकरणप्रभृतीनि ज्ञानसाधनानि परचैतन्यग्रहणार्हाणि विधातुं शक्यन्ते । समाजविज्ञानं नाम समाजस्य सूक्ष्मममध्ययनं विदधाति । परं तत्कृतमेतदध्ययनं प्रक्रियापरं भवति, न तु मूल्यपरम् । मूल्यहीना प्रक्रिया च नैरर्थ्यप्राया भवति । एतस्मिन्नध्ययने मूल्यानुप्रवेशस्तु पूर्णयोगेन कारयितुं शक्यते । धर्मशास्त्रेण तावत् परतत्त्वं जिज्ञास्यते । परतत्त्वोन्मुखीभावादेतेन खलु जगति महत् श्रैष्ठ्यमुत्पादितम् । परं त्वतर्कभूयस्त्वादेतेन भृशमन्धविश्वासम्, अज्ञानम्, क्रौर्यं चाप्यानीतम् । पूर्णयोगपरिष्कृतं त्वेतत् परमार्थज्ञानस्योपादेयं साधनं भवितुमर्हति । कलाश्चातितर्कभावानुद्बोध्य तद्द्वारेण सत्यस्याविष्काराय यतन्ते । भावशक्तिस्तु तर्कशक्तेर्व्यापकतरा । तर्कबुद्धिव्यतिरिक्तं निखिलमपि मानससंस्थानं खलु भावप्रधानम् । अपरं च, भावात्मिका प्रतीतिस्तावद् विषय-विषयितादात्म्यजन्या भवति । अथ व्यापकतरत्वात्, तादात्म्यपरकत्वाच्च भावाः खल्वतर्कविगम्यं जगद्रहस्यमभिज्ञापयितुं शक्नुवन्ति । एवं भावविन्यासपरकत्वात्, कलापि तत्त्वान्वेषणसाधनत्वेनोपयुज्यते नाम । परं तु चेतनावचेतनमनोमात्रपरिच्छिन्नत्वात्, तद्व्यतिरिक्ताध्यात्मकोट्यवबोधरहितत्वाच्चैषाप्यवबोधसाधनत्वेन स्वतोऽपूर्णा सती पूर्णत्वाय पूर्णयोगाङ्गीभावमपेक्षते । पूर्णयोगावतारितमति-

---

१४. तस्मिन्नेव, पृ० १९

१५. बर्ट्रेण्ड रसेल, ए बी सी ऑफ रिलेटिविटी (एलेन एण्ड अनविन, लन्दन, १९५८), पृ० १३७.

चेतनप्रकाशमुपलभ्यैषा परिष्कृता, उन्नमिता च भवितुमर्हति। पूर्णयोगसाधकश्च कलाद्वारेण भावात्मके चेतनावचेतनमनसि प्रविश्याल्पप्रयासेन तत्परिष्कारं सम्पादयितुं शक्नोति।

अनेन प्रकारेण यथा सर्वासां भौतिकज्ञानसरणीनां संशोधनेन सङ्ग्रहणेन च भौतिकविज्ञानं राजमार्गत्वं नीतम्, तथैवाधिभूताधिदैवाध्यात्मविषयकाणां ज्ञानसरणीनां संशोधनेन सङ्ग्रहणेन च योगो नाम देवमार्गत्वं नेतुं शक्यते, यमनुसृत्य जगद् दिव्यीभावं प्राप्तुमर्हति। अत्रैव खलु योगस्य पूर्णत्वम्।

## चतुर्दशोऽध्यायः

# वेदान्तपरम्परायां श्रीअरविन्दस्ययोगदानम्

भारतीयदर्शनशास्त्रेषु वेदान्तस्तावत् प्राचीनतमः, निरन्तरतमः, व्यापकतमश्चेत्यत्र नास्ति कश्चिद् विवादः। एतस्य वैशिष्ट्यस्य कारणं तु, प्रथमे कल्पे, एतदाधारभूतश्रौतज्ञानगाम्भीर्यमेवावबोद्धव्यम्। आत्मावबोधस्य गभीरतमे सोपानेऽवतीर्थ ऋषिभिर्या दर्शनाधारशिला न्यस्ता सा कालक्रमोपजायमानैर्मतमतान्तरैरुत्खन्यमानापि सती हिमवानिव न केवलमनिभिन्नैव, अपितूत्तरोत्तरमुपचीयमानेव दृश्यते। उपनिषद्वाक्यस्वारस्यभूतब्रह्मसूत्रव्याख्यानपरैरध्याचार्यवर्यैरभिनवोत्थापितमतमतान्तरैरेतद्दर्शनशास्त्रं भृशं समृद्धतरं कृतम्। एतासु व्याख्यासु च सर्वाधिकं विस्मयकारकं तथ्यं त्वेतद् यद् अद्वैत-विशिष्टाद्वैत-द्वैतप्रभृत्यन्योन्यनिरसनशीलमतमतान्तरप्रतिपादयन्त्योऽप्येता उपनिषद्वाक्यैः साकमात्मतारतम्यं स्थापयन्ति। काले काले उत्पद्यमानाभिरेताभिः यावदेकस्मिन् पक्षे उपनिषदो व्याख्याताः, तावत् पक्षान्तरे किञ्चिदभूतपूर्वं मतमपि प्रतिपादितम्। ननु तद्व्याख्यानप्रतिपादितमतजातं साकल्येन उपनिषत्सु पूर्वसन्निहितं भवेच्चेत्, तर्हि तद् युगपदेवाभिव्यञ्जितं स्यात्। अथ चेत् तत् तत्र पूर्वसन्निहितं न स्यात्, तदा कियत्याऽपि उपपत्त्या ततः साधारं निर्गमयितुं शक्यं न भवेत्। एतस्माद् ज्ञायते यद् वेदान्तशास्त्रं यावदेकस्मिन् पक्षे उपनिषत्प्रतिपादितसिद्धान्ताऽऽधृतम्, तावदन्यत्र तत्तत्कालोपजायमानयुगधर्मस्वारस्योपबृंहितम्।

यत्सत्यम्, मानवचैतन्यप्रतिफलितमूलतत्त्वालोके संसारस्थानां व्यापाराणां वस्तूनां च सम्यक् परीक्षणमेव दर्शनशास्त्रप्रयोजनम्। ननु मूलतत्त्वेष्वविकार्येषु सत्स्वपि व्यापारवस्तून्यनुक्षणमभिनवोन्मेषशीलानि। किं च, जगत्स्वरूपिण्येतेषां समष्टिरेव स्वत्वनिर्वाहपूर्वकं सततमभिनवा भवति। अतएव मूलतत्त्वाविष्कारक्षमोऽपि कश्चिद् ऋषिः सार्वकालिकं जागतिकं सत्यं युगपदेव परिभाषितुं न शक्नोति। अभिनवोत्पद्यमानानि व्यापारवस्तूनि स्वस्वानुरूपमभिनवं व्याख्यानमपेक्षन्ते। अतएव तात्त्विकज्ञानाऽऽधृता अपि दर्शनसिद्धान्ता अभिनवविकासोपजातान् व्यापारान् वस्तूनि च सम्यक्प्रकारेण व्याख्यातुं समर्थाः स्युरित्येतदर्थं विकासक्रमोत्पन्नाभिनवतत्त्वग्रामे उपचिते सति

परिवर्धनापेक्षा भवन्ति । एवं सति, यत्तु भिन्नभिन्नदेशकालोत्पन्नैर्वेदान्ताचार्यैः तत्तद्देशकालानुगतवस्तुव्यापारानुरूपं शाश्वतिकमप्यौपनिषदसिद्धान्तं पुनः पुनर्व्याख्यातं तदुचितमेव । अत्रौपनिषदसिद्धान्तस्य शाश्वतिकत्वं तावदेतद् यत् पुनः पुनो व्याचक्ष्यमाणोऽप्येष न केवलं स्वत्वमेव निर्वहति, अपितु तत्तद्व्याख्यानसम्भावनामपि प्रस्तूयते । कस्यचिद् व्याख्यानस्य चौचित्यमेतद् यत् स्वदेशकालप्राप्ताभिनववस्तुव्यापारग्रामविषयकं विश्लेषणं प्रस्तूयमानमप्येतन्मूलश्रुतेर्नापच्युतं भवति, परं च तच्छ्रुतिमाध्यस्थ्येनाधिकाधिकं देशकालक्रमोपजातमभिनवं वस्तुव्यापारग्रामं व्याचष्टे ।

एतयोर्द्वयोरपि क्षेत्रयोः वेदान्तशास्त्राय श्रीअरविन्दस्य योगदानं तु भृशम् । प्रथमे कल्पे तावदसौ न केवलं वेदान्तश्रुतेरनुसारी, अपितु तदायामस्याभूतपूर्वो विस्तारकोऽपीति स्वीकार्यम् । वेदान्त इति पदं तु न केवलं वेदान्तर्गतचरमविभागस्य वाचकम्, अपितु तद्रहस्यस्यापीति तावत् सर्वसम्मतम् । अतएव वेदान्ताचार्यैः प्रमाणत्वेन न केवलमुपनिषद एव स्वीकृताः, अपितु सम्पूर्णमेव वेदमङ्गीकृतम् । तैर्हि यथास्थानं प्रमाणार्थं समग्राया एव श्रुतेरुद्धृतम् । अपरं च, उपनिषदोऽपि आत्मप्रतिपादितानां सिद्धान्तानां मूलं काले काले संहितासु निर्दिशन्ति । ईशनाम्न्युपनिषत्तु संहिताया एवान्यतमो विभागः । एवं सत्यपि तैराचार्यैः स्वस्वसिद्धान्तप्रतिपादनक्रमेण केवलमुपनिषद्भ्य एव प्राधान्येनोद्धृतम् । यत्र क्वापि तैश्चेत् संहिता निर्दिष्टा, तत्तु पूर्वनिर्णीतसिद्धान्तोपपादनार्थं प्रमाणान्तरयोजननिमित्तमेव । अथ श्रीअरविन्द एव सर्वप्रथम आचार्यो येन तु वेदान्तशास्त्ररहस्योन्मीलनार्थं संहिता अधीताः, प्रतीकजालान्तरालाच्च तत्त्वतोऽवबुद्धाः । अथ तेन यावदेकस्मिन् पक्षे संहितास्वज्ञातपूर्वमर्थनिचयमन्विष्टम्, तावत् पक्षान्तरे तदाश्रयेण विनियोजित स्वदर्शनस्वरूपमभिनवं सिद्धान्तरत्नं वेदान्तशास्त्राय प्रदत्तम् ।

तथा हि, तत्प्रतिपादितमतिमानसं नाम तत्प्रदत्तसिद्धान्तरत्नेष्वन्यतमम् । न तावदेतत् कस्माच्चिद् वैदेशिकात् स्रोतसो गृहीतम् । ऋग्वेदीयम् "ऋत्-चित्" एवास्याधारभूमिः । किं तु यावद् ऋत्-चित् तस्मिन् वेदे यत्र तत्र विकीर्णभावेनोल्लिखितं तावदतिमानसं तु तत्त्वस्वरूपमिति श्रीअरविन्देन विवृतम् । एतस्मिन् विवृतिव्यापारे च तेन महर्षिणा स्वीयाऽन्तलस्पर्शिनी योगानुभूतिर्विनियुक्ता । अथैतेन सिद्धान्तेन वेदान्तशास्त्रान्तर्गता ब्रह्मजगतोरन्योन्यसम्बन्धविषयिकी दुरारूढा समस्या समाधापिता । तथा हि, ब्रह्म-जगन्मध्यगतं महदन्तरमुत्प्रेक्ष्य प्रत्यक्षतो व्याख्यातुमपारयन्तः पूर्वे वेदान्ताचार्या विविधप्रकारकाणि तत्त्वानि तत्त्वाभासानि वा पुरश्चक्रुः यानि तावन्न

केवलमपेक्षितं सम्बन्धं व्याख्यातुमसमर्थानि, अपितु स्वत एवैतच्छास्त्रकृते दुरुहसमस्यारूपेण परिणतानि। एतदर्थमेव श्रीशङ्कराचार्येण मायेत्यभिधः प्रत्यय आविष्कृतो यस्तु न्यायक्रमव्यतिरिक्तत्वात्, स्वरूपवैचित्र्याच्चाग्राह्यो नाम। एतस्य स्वरूपवैचित्र्यं तु, अबोधगम्यत्वात्, जगदेवासत्त्वं प्रापयति। एतस्य सम्बन्धस्य व्याख्यानाय श्रीरामानुजाचार्येण कर्मसिद्धान्त आश्रितः। पूर्वसृष्ट्यन्तर्गतानां प्राणिनां कर्मसंस्कारस्य फलीभावायैवैषा सृष्टिरुपजातेति तन्मतिः। परं कर्मसिद्धान्तस्तु यान्त्रिकप्रक्रियापरः। जगच्च नैतावन्मात्रम्। अंशतो यान्त्रिकं सदप्येतत् सामस्त्येन तद्व्यतिरिक्तम्। चैतन्यनियोजनशीलत्वादेतच्चैतन्यप्रणुदित स्यात्। श्रीभास्कराचार्यस्तु कस्यचिद् व्यवस्थितस्य सिद्धान्तस्य स्थाने सूर्यस्य तद्रश्मेश्च, जलस्य तदुद्भूततरङ्गस्य चान्योन्यसादृश्यमुखेनैतत् सम्बन्धं व्याख्याति। न खलु जगत्सदृशोऽतिगूढो व्यापार एतद्विधेन सादृश्यमात्रेण सम्यग्व्याख्यातुं शक्यते। एतन्निमित्तं त्वेतद्विधं तत्त्वमपेक्ष्यते यत् सत्तात्मकमपि स्यात् चैतन्यात्मकमपि, मानसमपि अतिमानसमपि, यान्त्रिकमपि सर्जनात्मकमपि, व्यष्टिपरमपि समष्टिपरमपि। श्रीअरविन्दप्रवर्तितमतिमानसं त्वेतद्विधमेव। एतद् हि तादृशं सत्तात्मकं चैतन्यं यत् क्वचित्तु यान्त्रिकपुनरावृत्तिरूपेणाचरति क्वचिच्च सर्जनात्मकस्वातन्त्र्यरूपेण, क्वचिद् वैयष्टिकत्वेन क्वचिच्च सामष्टिकत्वेन। अथैतस्य तत्त्वस्य स्वीकरणात् जगद् एकतो मायामात्रत्वाद् विमुच्यते, अन्यत्र च कारणकार्यमध्यगतानन्तपुनरावृत्तिमात्रत्वात्। एवमेव तस्य सामष्टिकप्रयोजनमात्रत्वं वैयष्टिकप्रयोजनमात्रत्वं च निराकृते भवतः। स्वेन वैयष्टिकत्वानुगतेन सामष्टिकत्वेन ह्येतद् व्यष्टिभावमपि व्याचष्टे समष्टिभावमपि।

सृष्टिव्यापारान्तर्गतावरोहारोहस्वरूपप्रक्रियाद्वयविवेकस्तावद् वेदान्तशास्त्राय श्रीअरविन्दस्यापरं महद् योगदानम्। संहितासु उपनिषत्सु च मुहुर्मुहुरुल्लिख्यमानेष्वपि अवरोहारोहविषयकेषु निर्देशेषु, पूर्वतरैराचार्यैः कदापि एतदधिकृत्य गाम्भीर्येण नावहितम्। तथा हि, ऋग्वेदीये नासदीयाभिधे सूक्ते उक्तं यत् सृष्टेः प्राक् सदसद्व्यतिरिक्तमेतादृशमेकं तत्त्वमासीद् यदवातमेव स्वधयाऽऽनीत्, यच्च तदनन्तरं गहनतमे तमसि आत्मानं तिरोदधे, अथ कथञ्चिदुत्थाय आत्मानं जगद्रूपेण परिणमयांचकार। एवमेव पुरुषसूक्ते श्रूयते यत् सृष्टिपूर्ववर्तिपुरुष आत्मनोऽशत्रयेण तावदमर्त्यो भवति, चतुर्थांशेन चात्मानं जगद्रूपेण परिणमयति। ननु यावत् श्रीशङ्कराचार्य एतादृशीः श्रुतीर्मायावादपरिपोषणार्थं विनियुङ्क्ते, श्रीरामानुजाचार्यश्चैतासु सृष्टि-प्रलययोर्विपर्यासं पश्यति, तावत् श्रीअरविन्द एतासु स्वीयमवरोहारोहसिद्धान्तं न्यस्यति। एतेन सिद्धान्तेन त्वितरसम्प्रदायोत्पादिता वेदान्तशास्त्रगता बहवो दोषा निराक्रियन्ते। तथा ह्येतादृशास्तर्कसम्म-

तस्य सिद्धान्तस्याभावे एव श्रीशङ्कराचार्यो मायावादमाश्रयांचकार। मायावादाश्रयणं च तस्य सर्जनात्मकव्यापारस्यानभिज्ञत्वं पिशुनयति यमवलम्ब्य परमतत्त्वं जगद्रूपेण परिणतम्। एवमेव ब्रह्मैकत्वेऽपि जगन्नानात्वसिसाधयिषुः श्रीभास्कराचार्यो जलतरङ्गयोः सूर्यरश्म्योश्चैकत्वानेकत्वोदाहरणत्वोपपादने एव स्वीयां निखिलां प्रतिभां विनियुञ्जन् मनागपि विचारयितुं न प्रावर्तत यदेतस्य व्यापारस्य पृष्ठे कश्चिन् न्यायसम्मतः सिद्धान्तः सम्भवेदिति। निदर्शनं नाम सिद्धान्तपरिपोषकं भवितुमर्हति, न तु कथञ्चित् सिद्धान्त-प्रतिरूपम्। श्रीरामानुजाचार्येण तावत् तर्कसम्मतप्रकारेण प्रदर्शितं यदेकस्मादेव ब्रह्मण एकस्मिन् पक्षेऽनेका जीवा उत्पद्यन्ते, पक्षान्तरे चैका प्रकृतिर्जायते। एवं सत्यपि तेन निखिलमपि सृष्टिकारणं जीवव्यष्टिष्वेव न्यस्तम्। एतस्मिन् मते खलु सृष्टिप्रक्रियागतं जीवव्यष्टिव्यापारं सम्यगभिज्ञातम् किं त्वेतदेव समष्टिविषये उपेक्षितम्। सृष्ट्यवयवत्वेन समष्टिश्चेद् व्यष्टेरनूनतरा, तर्हि सृष्टिप्रेरणायां तया व्यष्टेरनूनसहयोगिन्या भवितव्यम्। एवं सति, वैयष्टिकेन साकं किञ्चित् सामष्टिकमपि जगत्प्रयोजनं भवितव्यम् तदनुरूपं च काचित् सामष्टिकी सृष्टिप्रक्रिया। श्रीअरविन्दप्रतिपादिताऽवरोहारोहप्रक्रिया त्वेतत्सर्वं तर्कापेक्षितं तत्त्वमात्मन्युपबध्नाति। तथा हि, तदभिमतैषा सच्चिदानन्दाभिलक्षित-परिणामानन्दोद्दिष्टा सती यावदेकस्मिन् पक्षे व्यष्टीरुद्भावयति, संवर्धयति, पूर्णत्वं च नयते तावत् पक्षान्तरे व्यष्टिमुखेनैव समष्टिमप्युन्नीयते। अपरं च, वर्तमानयुगीनवैज्ञानिक-रीत्याऽपि प्रमाणीक्रियते यदारोहो नाम सृष्टिप्रक्रियायाः तात्त्विकाङ्गभूत इति। पुनश्चारोहस्तु अवरोहपूर्व एव सम्भवति। अथावरोहारोहप्रक्रियानुवर्तिजगत् स्वं प्रातिभासिकत्वम्, वैयक्तिकहेतुमात्रचरितार्थत्वम्, लीलामात्रवशादेकत्वबहुत्वान्तर्गत-दोलायमानत्वं च परित्यज्य यथार्थत्वम्, व्यष्टिसमष्टिपरमेश्वरस्वरूपतत्त्वत्रयनिमित्तत्वम्, सुनियोजितसंसरणशीलत्वं च धारयति।

अवरोहारोहव्यापारकारणत्वेन गतिस्थितिस्वरूपतत्त्वद्वयसद्भावसिद्धान्तस्या-विष्करणं नामापरं श्रीअरविन्दीयं विशिष्टं योगदानम्। ब्रह्मैव जगत्कारणमिति तावत् सर्वे वेदान्ताचार्या ऐकमत्येन स्वीकुर्वन्ति। परं तु वैकारिकं जगदुत्पाद्यापि कथं नाम तन्निर्विकारमास्ते इत्येवंरूपां समस्यां समाधातुं तैस्तावदन्यान्यमतान्युपकल्पितानि। तथा हि, श्रीशङ्कराचार्य एतदर्थं मायावादमाविष्करोति। ननु पूर्वतरोक्तरीत्या ज्ञायते यन्मायावादपोषणार्थमुद्भावितस्तर्कः स्वत एवात्मनं हन्ति। श्रीरामानुजाचार्यश्चैनां समस्यां विशेष्यविशेषणसम्बन्धद्वारेण समाधातुं यतते। तदुपकल्पितं ब्रह्म जगत्सृष्ट्वाऽपि तथैव निर्विकारमास्ते यथा विशेषणविशिष्टमपि विशेष्यं पूर्ववदेव विद्यते। अतएव तेन

जीवात्मा जगच्च ब्रह्मविशेषणत्वेन गृहीते । ननु प्रत्यक्षत एवैतत् समाधानं गुणद्रव्ययोरात्यन्तिकविभेदेऽवलम्बितम् । एतत्सिद्धान्ताभिमतं द्रव्यं निर्गुणमपि भवितुमर्हति, सगुणमपि । अथ जगद्गुणकं ब्रह्म सृष्टिकाले सगुणं भवितुमर्हति, प्रलयकाले च निर्गुणमिति श्रीरामानुजाचार्य उपसंहरते । किं तु श्रीरामानुजयुगे प्रामाणिकमिव प्रतीयमानमप्येतत् समाधानम् ईसवीये अष्टादशशतके आंग्लदेशीयेन ह्यूम इति नाम्ना दार्शनिकेन गुणद्रव्यमध्यगते एतादृशे सम्बन्धे निराकृते सति विशेष्यविशेषणसम्बन्धावलम्बितमेतत् समाधानं स्वत एव निर्मूलं भवति । अपरं च, एतस्मिन् सापेक्षत्वयुगे गुणद्रव्ययोरन्योन्यपृथक्पदार्थत्वेनोपकल्पनं नामातर्कसङ्गतम् । भौतिकपदार्थप्रकृतिश्चेत् पारमार्थिकपदार्थस्वरूपनिर्धारणे कथञ्चिदुपादेया, तर्हि सम्प्रत्येषा समस्या गुणद्रव्ययोरितरेतरपार्थक्यस्थाने गतिस्थितितत्त्वयोरितरेतरविवेकद्वारेण, वास्तविकत्वसम्भाव्यत्वप्रत्ययमुखेन वा समाधेया । श्रीअरविन्दप्रस्तावितं समाधानं त्वेतद्विधमेव । स्थितिर्गतिश्च परमार्थतः तत्त्वस्यैव स्वरूपद्वयभूते इत्यसौ प्रतिपादयति । एतयोर्मध्येऽन्योन्यप्रत्यनीकत्वोपकल्पनं तु तत्त्वस्वरूपाज्ञानमात्रपरिचायकम् । स्थितिस्तु गतिगर्भा भवति, गतिश्च स्थित्युन्मुखी । यावत् स्थितिः सम्भावनाऽऽश्रयभूता, तावद् गतिः तद्वास्तवीकरणसाधनभूता । स्थितिं विना चेद् गतिर्न सम्भाव्यते, तर्हि गतिं विना स्थितिर्निष्प्रयोजना भवति । सच्चिदानन्दस्वरूपद्वयभूतत्वादेते द्वे अपि शाश्वतिके स्तः, अन्योन्यव्यापिन्यौ च । उभाभ्यामतीतत्वात्तु सच्चिदानन्दः एतयोर्विपरिणामेन न कथञ्चिद् विकृतो भवितुमर्हति ॥

जगद्दिव्यीकरणसिद्धान्तश्चान्यत् श्रीअरविन्दयोगदानम् । अस्य सिद्धान्तस्य बीजमन्त्रस्तु जडजीवनमनस् इति तत्त्वत्रयस्य सततोत्थानोन्मुखीभावः । सम्प्रत्येतत्तु सन्देहातीतं यदस्मिन् जगति जडतत्त्वाज्जीवनतत्त्वमुत्पन्नम्, जीवनतत्त्वाच्च मनस्तत्त्वम् । ननु मनः काञ्चिदतिमानसान् विचारान्, प्रत्ययान्, भावान्, प्रवृत्तीश्च विकासयद् दृश्यते इत्यपि नाविदितम् । एतस्माज् ज्ञायते यत् कालक्रमपरिणतानि जगदवयवभूतान्येतानि त्रीणि तत्त्वान्यतिमानसचैतन्यालोकितानि भवितार इति । एनामेव सम्भावनां पुरस्कृत्य श्रीअरविन्देन जगद्दिव्यीकरणसिद्धान्तः प्रतिपादितः । एतावता तु नानुमेयं यदेष सिद्धान्तः सर्वथा वेदान्तशास्त्रस्याज्ञातपूर्व इति । तथा हि, संहितासु ऋषिभिर्मुहुर्मुहुराकांक्ष्यते यत् तास्ता देवता मनः, जीवनम्, शरीरावयवान्, अथवा सर्वाण्येव जागतिकानि वस्तूनि व्याप्नुवन्त्विति । अथ जडजीवनमनस्तत्त्वविषयामुक्तप्रवृत्तिम्, एनामार्षाकांक्षां च परामृश्य श्रीअरविन्द आत्मयोगानुभूतिबलेनैनं सिद्धान्तं प्रत्यपादयतेति निश्चीयते । एतस्य

सिद्धान्तस्य वेदान्तशास्त्रान्तर्गतमभिनवत्वं त्वेतस्मिन् तथ्ये निहितमास्ते यत् संहितान्तर्गतेष्वेतद्विषयकेषूल्लेखेषु सत्स्वपि नैकेनापि पूर्वतरेण वेदान्ताचार्येणैतत् सम्यगवहितम्, का वार्ता पुनः सिद्धान्तरूपप्रदानस्य । तथा हि, जगन्मिथ्यात्वप्रतिपादकः श्रीशङ्कराचार्यस्तावत् तदुत्थानाय कमप्यवसरं प्रदातुं न शक्नोति । तन्मतेन, मायामात्रविजृम्भितत्वात्, जगत उत्पत्तिः खल्वनिर्वचनीयप्रयोजनास्ति । केवलमीश्वरदृष्ट्यैवैषा लीलास्वरूपा । "लोकवत्तु लीलाकैवल्यमिति" सूत्रं च तेनेश्वरदृष्ट्यैव व्याख्यातम् । परमार्थदृष्ट्या तु "न चेयं परमार्थविषया सृष्टिश्रुतिः, अविद्याकल्पितनामरूपव्यवहारगोचरत्वात् ।"[1] एवमेव श्रीरामानुजाचार्यो जीवोद्धारकृते भृशं विचिन्तयन्नपि जगदुद्धारविषये सिद्धान्ततोऽक्षिनिमीलनमेव करोति । तदभिमतं चित्तत्त्वं तावत् शाश्वतम्, एकरूपम्, सत्स्वरूपम् च; किं तु अचित्तत्त्वम्, परिवर्तनशीलत्वात्, असद्रूपम् । अतएवाचित्तत्वस्येश्वरशरीरस्वरूपत्वं स्वीकुर्वाणोऽप्यसौ जीवकृतेऽवहेयत्वं प्रतिपादयति । ईशभक्तिमार्गेण जगतः पलायनमेव श्रेयस्करमिति तदुपदेशः । ईश्वरशरीरभूतत्वादचित्तत्त्वमपि, चित्तत्त्ववत्, शोधन-पोषण-परिवर्धनार्हमिति तद्विचारपथे नागतम् ।[2] चित्तत्त्वात्मको जीवोऽचित्तत्त्वात्मकाज्जगतः परमार्थतः पृथक् सन् केवलमज्ञानवशात् तत्सम्पृक्त इति मन्वानः श्रीरामानुजाचार्यो जगतः तत्पार्थक्यमेव मोक्ष इत्युपसंहरते । सच्चिदानन्दस्वरूपत्वात् अचित्तत्त्वमपि शोधन-पोषण-परिवर्धनार्हमिति तु श्रीअरविन्दमतम् । चैतन्य-वल्लभशैवैस्तावद् दीव्यीकरणस्य केचित् पूर्वाभासाः प्रस्ताविता इति तु सन्देहातीतम् । किं तु भक्तिभावोद्रेकस्वरूपत्वात्, व्यष्टिमात्रनिष्ठत्वात्, प्रतीतिमात्रजन्यत्वाच्चैतद्विधं दिव्यीकरणं खलु भृशं वास्तवीकरणम्, विशदीकरणं चापेक्षते । एतत्तु श्रीअरविन्देनैव सम्पादितम् ।

का वार्ता जडतत्त्वस्य, पूर्ववर्तिभिर्वेदान्ताचार्यैस्तु जीवनतत्त्वमपि त्याज्यकोट्यां निक्षिप्तम् । पूर्वतरकर्मफलोपजायमानत्वात् एतत्खल्वात्मन्यज्ञानावरणमिति मन्वानास्ते एतन्निर्मूलनमेव वरमित्युपदिशन्ति । एतस्मादेव कारणात् तैर्जीवनमरणप्रक्रिया कर्मपरत्वेन व्याख्याता । कर्म नाम जीवनहेतुः । जीवनस्य त्याज्यत्वात् कर्मापि सर्वथा परित्याज्यम् । अतएव तैः संन्यासः समाश्रितः । सर्वैरपि जनैर्निखिलकर्मपरित्यागस्तु समाजविध्वंसकारकः स्यादित्याशङ्क्य भगवद्गीतामनुसरद्भिः कैश्चित् तावत् कर्मफलपरित्याग उपदिष्टः । श्रीअरविन्दस्त्वेतद्विषये एतस्या निषेधात्मकविचारकोटेरुत्थाय

---

१. श्रीशङ्कराचार्यस्य, ब्रह्मसूत्रभाष्ये, २।१।३३.
२. श्रीभाष्ये, १।१।१.

स्वीकारात्मकं मतमुपस्थापयति । तेन तु चैतन्योत्थापनं नाम निखिलविकासक्रमलक्ष्यत्वेनोपपादितम्, जीवनतत्त्वं च तदाश्रयत्वेन, कर्म च तत्साधकत्वेन । अनया रीत्या कर्मसहकृतं जीवनतत्त्वं तावदात्माभ्यन्तरतश्चैतन्यमुत्पाद्य परिपोष्य चेमां विकासकोटिं नीतवान् । अथैतदतः परं अतिमानसचैतन्यज्योतिरुरीकृत्य स्वात्मनि दिव्यत्वपरिणाममुत्पादयितुं शक्नोति । एवं दृष्टं जीवनतत्त्वं तावद् दिव्यत्वोत्थापनसम्भावनामुपार्जयति, कर्म च तत्साधकत्वपदमारोहति ।

अपरं च, दिव्यीकरणसिद्धान्तेन श्रीअरविन्दो वैयक्तिकमोक्षस्पृहां निराचकार । एषा स्पृहा त्वहंकारजन्येति तन्मतिः । अथानेन सिद्धान्तेनासौ वेदान्तमार्गस्य परवर्तियुगोपजायमानमहंकारपरत्वं समूलमुच्चरवान । परं तत्कृतवैयक्तिकमोक्षसिद्धान्तखण्डनान्नानुमेयं यदसौ कथञ्चिद् व्यष्टिविरोधीति । प्रत्युत यादृशं महत्त्वं सा श्रीअरविन्ददर्शने प्राप्नोति नादृशं महत्त्वं तस्यै केनापि पूर्वतरेण वेदान्ताचार्येण न प्रदत्तम् । तथा हि, वैयक्तिकमोक्षोपदेशपरोऽपि श्रीशङ्कराचार्यो व्यष्टिं तावदसद्भूतां मन्यते ।[३] एवमेव श्रीरामानुजाचार्याभिमता व्यष्टिस्तावदीश्वरशरीरभूताऽपि सती वस्तुतोऽहंकारमूलैव प्रतीयते । असौ हि संसारस्था सती स्वकर्मबलेन स्वत्वं रक्षति, परमार्थस्था सती चेश्वरभक्तिमात्रेण । श्रीभास्कराचार्योऽप्येनाम्, सूर्यरश्मिवत्, सृष्टौ समष्टिपृथग्भूतां प्रलयकाले च निरस्तसत्त्वां मन्यते । श्रीमध्वाचार्यश्चैनां परमार्थत ईश्वरभिन्नत्वेन प्रतिपाद्य जगति ईश्वर-समष्टिभ्यां साकम् अव्याख्येयसम्बन्धां प्रमाणीकरोति । अथैतादृशी व्यष्टिः सत्तासामस्त्यान्तर्गतं किमपि सुनिश्चितं पदं लब्धुं नार्हति । श्रीअरविन्दमते तु व्यष्टिर्नैवासद्भूता न चाहंकाराश्रिता । एषा तु सच्चिदानन्दीयनानात्वाश्रिता सती सर्वथा तात्त्विकी । आत्माभिव्यक्तिपरः सच्चिदानन्दस्तावदेकतः समष्टिं सृजति, अन्यतश्च व्यष्टिम् । समष्टिस्तु तदेकत्वजन्मा, व्यष्टिश्चानेकत्वोद्भवा । असौ त्वानन्त्यस्वरूपत्वादेकत्वानेकत्वयोरुभयोरेवातिरिच्यते । अभिव्यक्तिप्रकारद्वयस्यान्यतमस्वरूपत्वाद् व्यष्टिर्नाम तथैव सद्भूता यथा समष्टिः । अतएव समष्टिस्तावद् व्यष्ट्यै आधारं प्रददाति, व्यष्टिश्च समष्टिमारोहमार्गं नयति । एवमेकत्वानेकत्वाभ्यां सह सच्चिदानन्दस्वरूपत्रय्यन्तर्गतान्यतमस्वरूपभूता व्यष्टिः, तात्त्विकत्वात्, दिव्यत्वप्राप्तावपि स्वत्वं हातुं नार्हति । अनेन प्रकारेण, यदा त्वितरेषु वेदान्ताचार्येषु केचित् सर्वातिशायिनीमेव सत्तां सद्भूतेति मन्यन्ते शेषाश्च तया सार्धं समष्टिमात्राम्, तदा श्रीअरविन्द एताभ्यां समं व्यष्टिमपि सच्चिदानन्दस्वरूपत्वेनोपपाद्य सर्वतत्त्वसामञ्जस्यं स्थापयति ।

---

३. ब्रह्मसूत्रभाष्ये, १।३।१९.

श्रीअरविन्दप्रकल्पितं पूर्णज्ञानमपि वेदान्तसिद्धान्तवैशद्यकारकम्। ईशोपनिषदि तावद् विद्याऽविद्ये उभे अपि वेद्ये इति श्रूयते। परं तु परवर्तिवेदान्तशास्त्रे परैव विद्या ज्ञानसर्वस्वत्वेनाङ्गीकृता, अपरा च विद्या निन्दाकोटिं नीता। अथ ब्रह्मज्ञानव्यतिरिक्त-मितरं सर्वविधमेव ज्ञानं तिरस्कृतप्रायं सञ्जातम्। फलत इतरज्ञानविज्ञानविस्मरणपूर्वकं ब्रह्मानुभूतिरेव ज्ञानसर्वस्वमिति स्वीकृता। एतस्मात् कारणाद् यावदेकस्मिन् पक्षे भारतीया मनीषा ब्रह्मव्यतिरिक्तनिखिलज्ञानविज्ञानविमुखी सञ्जाता, तावत् पक्षान्तरे वेदान्तशास्त्रं खलु विकासाद् विरम्य रूढ्युन्मुखं बभूव। श्रीअरविन्देन तु गभीरयोगानु-भूतिद्वारेण तादात्म्यज्ञानप्रत्ययपुरस्कारपूर्वकं मूलभूतं वेदान्तज्ञानं सुसिद्धान्तितम्, अथ च भौतिकविज्ञानप्रभृतिज्ञानविधीन् तत्त्वज्ञानाङ्गत्वेन स्वीकृत्य वेदान्तशास्त्रस्य क्षेत्रं भृशं विस्तारितम्। तद्विस्तारिते वेदान्तशास्त्रे च सर्वप्रकारकं ज्ञानं यथोचित पदं लभते। अभूतपूर्वज्ञानविज्ञानविस्तारकेऽस्मिन् युगे तावद् दर्शनशास्त्रेण सर्वविधज्ञानविज्ञान-सामञ्जस्यकारकेण भवितव्यम्। मानवज्ञानकरणप्रतिफलिततत्त्वजातविषयकत्वाद् ह्येतत् शास्त्रं कालक्रमप्राप्तज्ञानविज्ञानविस्तारानुसारं सततं विस्तारोन्मुखं स्यात्। साम्प्रदायि-कानां तु, गतानुगतिकप्रियत्वात्, अभिनवोपजातज्ञानविज्ञानं प्रति प्रायश औदासीन्यमेव दृश्यते। अथ कस्याञ्चिदपि दर्शनपरम्परायां काले काले एतादृशो मनीष्यपेक्ष्यते यस्तामभिनवोपजातज्ञानविज्ञानसामञ्जस्यमयीं कारयेत्। नन्वेतस्मिन् युगे विवेकानन्द-रामतीर्थ-शिवानन्दप्रभृतयः केचिन् मनीषिण आविर्बभूवुः यैः खलु भौतिकी-गणित-जीव-विज्ञानप्रभृतिभौतिकविज्ञानोपार्जितेन ज्ञानेन वेदान्तशास्त्रं भृशं संवर्धितम्। परं तु तैः सम्पादितैषा संवृद्धिः प्रायेण निदर्शनमात्रपराऽस्ति। तथा हि, भौतिकविज्ञानेन सह वेदान्तशास्त्रस्य वैचारिकादानप्रदानसम्भावनामात्रमितस्ततः एतैर्मनीषिभिः सङ्केतितम्। अथ तेषां कृतिः वेदान्तस्योपरि विज्ञानसम्मता टिप्पणीव प्रतीयते। श्रीअरविन्देन तु निखिला वेदान्तविद्या, निखिलमपि यथोपलब्धं विज्ञानं समाहृत्य, बृहद्योगानुभूतिकटाहे सुदीर्घकालपर्यन्तं सम्पच्य, एकरसीभूतं च कृत्वा पूर्णज्ञानरूपेणोपस्थापितम्। अथ तदीया कृतिः वेदान्तस्योपरि विज्ञानभाष्यमिव संस्तोतुमर्हति।

अपरं च, इत्थं निष्पन्ने एतस्मिन् भाष्ये न केवलं वेदान्तस्य विज्ञानानुसारिणी विकाससम्भावना निहिता, अपितु विज्ञानस्यापि वेदान्तानुसारिणी विकाससम्भावना निर्दिष्टा। विज्ञानं हि दर्शननेत्रं भवति। अतीतकाले सर्वे मूलभूता वैज्ञानिकाविष्काराः तत्तद्दर्शनसिद्धान्तमेवाधृत्योपजाता इति तु विज्ञानविदां सम्मतिः। सम्प्रति चैनां विकासकोटिमारूढा विज्ञानं नाम सुचिरविभ्रमानन्तरं पुनरपि दर्शनोन्मुखं सञ्जातम्।

अथ भाविविकासार्थमेतत् किमपि विज्ञानप्रवणं व्यापकं दर्शनसिद्धान्तमपेक्षते। ननु विज्ञानसम्मतत्वात्, अध्यात्ममूलकत्वात्, सर्वविधज्ञानसमन्वयपरत्वात्, अद्भुतयोगदृष्टि-सम्पन्नत्वाच्च श्रीअरविन्ददर्शनसिद्धान्त एनामावश्यकतां पुष्कलतया पूरयितुमलमित्यपि वक्तुं शक्यते।[४]

---

४. दि लाइफ़ डिवाइन, पृ० १३५.

# पारिभाषिकशब्दार्थसूची

| | | |
|---|---|---|
| अङ्गीकरणम् | — | Assimilation |
| अचेतनः | — | Inconscient |
| अतिचेतनः | — | Superconscient |
| अतिजागतिकः | — | Extra-cosmic |
| अतिमानवः | — | Superman |
| अतिमानसम् | — | Supermind |
| अतिमानसज्ञानी | — | Gnostic Being |
| अधिमानसम् | — | Overmind |
| अध्यात्मचैतन्यम् | — | Spiritual Consciousness |
| अध्यात्मसंस्थानम् | — | Spiritual Being |
| अनेकवस्तुनिष्ठ | — | Multiple |
| अन्तर्ज्ञानम् | — | Intuition |
| अन्तर्मानसम् | — | Inner Mind |
| अन्तर्मुखः | — | Introvert |
| अन्तश्चेतनम् | — | Intraconscient |
| अर्वाचीनावरोहः | — | Descent from ahead |
| अवचेतनम् | — | Subconscient |
| अवतारः | — | Incarnation |
| अवरोहः | — | Descent |
| अव्यवहितज्ञानम् | — | Knowledge by Identity |
| आत्मतिरोभावः | — | Self-concealment |
| आत्मनिष्ठा | — | Self-existence |
| आत्माभिव्यक्तिः | — | Self-expression |
| आनन्त्यम् | — | Infinity |

| | | |
|---|---|---|
| आणविकः | — | Atomic |
| आनन्दः | — | Delight |
| आयामः | — | Dimension |
| आरोहः | — | Ascent |
| आहंकारिकाज्ञानम् | — | Igoistic Ignorance |
| इन्द्रियलभ्यप्रतिमा | — | Sensory Image |
| उच्चतरमनः | — | Higher Mind |
| ऋत्-चित् | — | Truth-Consciousness |
| कादाचित्कः | — | Adventitious |
| कालिकाज्ञानम् | — | Temporal Ignorance |
| ख्रिष्टीयकारुण्यम् | — | Christian Compassion |
| गतितत्त्वम् | — | Dynamis |
| ग्रन्थिः | — | Complex |
| घटना | — | Event |
| चिति | — | Comprehension |
| चित् | — | Consciousness |
| चित्शक्तिः | — | Consciousness-Force |
| चैतन्यम् | — | Consciousness |
| चैत्यपुरुषः | — | Psychic Being |
| जडतत्त्वम् | — | Matter |
| जीवनतत्त्वम् | — | Life |
| जीवात्मा | — | Soul |
| तत्त्वज्ञानम् | — | Metaphysics |
| तपोध्यानम् | — | Exclusive Concentration |
| तात्त्विकः | — | Essential |
| दमितवासनाः | — | Suppressed Desires |
| दिव्यीकरणम् | — | Divinization |
| नाडीतन्त्रम् | — | Nervous System |
| निगूढचैतन्यम् | — | Subliminal Consciousness |
| निगूढचेतनम् | — | The Subliminal |

| | | |
|---|---|---|
| निमित्तकारणम् | — | Efficient Cause |
| निर्णयः | — | Decision |
| निर्वैयक्तिकः | — | Impersonal |
| निषेधात्मकम् | — | Negative |
| परमतत्त्वम् | — | Absolute |
| परिचेतनम् | — | Circumconscient |
| परिणामः | — | Becoming |
| परिणामानन्दः | — | Delight of Becoming |
| पारमार्थिकः | — | Real |
| पूर्णज्ञानम् | — | Integral Knowledge |
| पूर्णयोगः | — | Integral Yoga |
| प्रकाशमानमनः | — | Illumined Mind |
| प्रक्रिया | — | Process |
| प्रतिबिम्बवादः | — | Theory of Reflection |
| प्रत्ययः | — | Concept |
| प्रत्ययनम् | — | Conceptualization |
| प्रत्ययात्मकम् | — | Conceptual |
| प्राचीनावरोहः | — | Involution |
| प्रातिभप्रेरणा | — | Inspiration |
| बहिर्मुखः | — | Extrovert |
| भावात्मकम् | — | Positive |
| भावानन्दः | — | Delight of Becoming |
| भ्रमज्ञानम् | — | Illusion |
| मनस्तत्त्वम् | — | Mind |
| मनोविश्लेषणम् | — | Psycho-analysis |
| मनोवैज्ञानिकाज्ञानम् | — | Psychological Ignorance |
| मूलप्रवृत्तिः | — | Instinct |
| मौलिकाज्ञानम् | — | Original Ignorance |
| यन्त्रवादः | — | Mechanistic Theory |
| यान्त्रिकम् | — | Mechanical |

| | | |
|---|---|---|
| युगपद् | — | Simultaneously |
| यौगपद्यम् | — | Simultaneity |
| वस्तु | — | Object |
| वास्तविकम् | — | Actual |
| वास्तवीकरणम् | — | Actualization |
| विकासवादः | — | Theory of Evolution |
| विज्ञानमयपुरुषः | — | Self |
| विपर्यासः | — | Reversal |
| विशेषः | — | Particular |
| वैयक्तिकः | — | Personal |
| वैश्वचैतन्यम् | — | Cosmic Consciousness |
| वैश्वाज्ञानम् | — | Cosmic Ignorance |
| व्यवस्थापनम् | — | Integration |
| व्यवहितं ज्ञानम् | — | Separative Knowledge |
| व्यष्टिः | — | Individual |
| व्यावहारिकाज्ञानम् | — | Practical Ignorance |
| सङ्कल्पः | — | Premise |
| सङ्घटनात्मकाज्ञानम् | — | Constitutional Ignorance |
| संवेदना | — | Sensation |
| सत् | — | Existence |
| सत्तात्मकम् | — | Existential |
| सत्यचित् | — | Truth-Consciousness |
| सदानन्दः | — | Delight of Being |
| समवायिकारणम् | — | Material Cause |
| समष्टिः | — | Universal |
| सम्भावना | — | Possibility |
| सर्वातिशायी | — | Transcendent |
| सर्वांशसामष्ट्यम् | — | Integrality |
| सहजक्रिया | — | Reflex Action |
| सापेक्षतावादः | — | Theory of Relativity |

| | | |
|---|---|---|
| सामष्टिकः | — | Integral |
| सामान्यः | — | General |
| सांयोगिकः | — | Fortuitous |
| सूक्ष्मशरीरम् | — | Subtle Body |
| सोद्देश्यकारित्वम् | — | Teleology |
| सौकर्यसिद्धान्तः | — | Theory of Ease |
| स्थितितत्त्वम् | — | Stasis |
| स्वरूपोत्थापनम् | — | Transformation |

———

# श्रीअरविन्दप्रणीताः प्रमुखा ग्रन्थाः

दर्शनशास्त्रमधिकृत्य

1. Evolution
2. Heraclitus
3. The Hour of God
4. The Life Divine
5. The Problem of Rebirth
6. The Riddle of this World
7. The Superman
8. The Supramental Manifestation upon Earth

वेदादिकमधिकृत्य

1. Hymns to the Mystic Fire
2. Secret of the Veda
3. The Upanishads
4. Essays on the Gita

योगमधिकृत्य

1. Bases of Yoga
2. Letters of Sri Aurobindo
3. Letters on Yoga
4. Lights on Yoga
5. More Lights on Yoga
6. The Mother
7. The Synthesis of Yoga
8. Uttarapara Speech
9. Yoga and its Objects

**संस्कृतिमधिकृत्य**

1. Foundations of Indian Culture
2. Significance of Indian Art
3. The Human Cycle
4. Ideal of Human Unity

**साहित्यमधिकृत्य**

1. The Future Poetry
2. Kalidasa
3. Letters on Savitri
4. Vyasa and Valmiki

**काव्यम्**

1. Savitri
2. Collected Poems
3. Ilion
4. Poems Past and Present
5. Last Poems
6. More Poems

**नाटकम्**

1. Conversations of the Dead
2. Eric
3. Vasavadatta

———

"The author of "Sri Aravinda-Darshanam" is truly a master of this most expressive language and has adopted a very lucid and easy style to deal with a difficult subject which is as wide as it is subtle and as intriguing as the language itself in which the book is written.

Satyaprakash Singh has dived deep into the ocean of Sri Aurobindo's supreme light and successfully endeavoured to restore the Sanskrit language to its role as the speech of the heart and soul of India and make it once more a virile vehicle of the Spirit, transcendenatl, universal and individual, encompassing all that the human mind is capable of.

The book is much more than interesting inasmuch as it clearly and deftly gives a beautiful form to Sri Aurobindo's direct vision of Reality in all its aspects and in all its relations with the relative worlds............. We acclaim this enterprise and wish it a far-reaching success in the class of great books."

**Mother India**
Sri Aurobindo Ashram
Pondicherry

"As the first systematic work on Sri Aurobindo's Philosophy to appear in Sanskrit, this book is more than welcome. The author presents the fundamentals of this philosophy under suggestive heads...............The discussion is stimulating and points to the necessity of more comparative studies in the field."

**Advent**
Sri Aurobindo Ashram
Pondicherry